UGC - CARE LISTED

ISSN: 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A Refereed & Peer-Reviewed Quarterly Research Journal)

44 वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) 2019

प्रधानसम्पादकः
प्रो.रमेशकुमारपाण्डेयः
कुलपतिः

सम्पादकः
प्रो.शिवशङ्करमिश्रः

सहसम्पादकः
डॉ.ज्ञानधरपाठकः



श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(राष्ट्रियमूल्याङ्कन-प्रत्यायनपरिषदा 'ए' श्रेण्या प्रत्यायितः, मानितविश्वविद्यालयः)
नवदेहली-16

UGC- CARE Listed ISSN : 0974-8946

अनुसन्धान-प्रकाशन-विभागीया त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED & PEER- REVIEWED QUATERLY RESEARCH JOURNAL)

44 वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) 2019 ई.

प्रधानसम्पादकः

**प्रो.रमेशकुमारपाण्डेयः**

कुलपतिः

सम्पादकः

**प्रो.शिवशङ्करमिश्रः**

शोधविभागाध्यक्षः

सहसम्पादकः

**डॉ.ज्ञानधरपाठकः**

शोधसहायकः




**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

नवदेहली-110016

प्रकाशकः
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया, नवदेहली-110016



ISSN :- 0974 - 8946


मुद्रकः - गणेशप्रिंटिंगप्रेसः, कटवारियासरायः नवदेहली-16


श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
विद्यया विन्दतेऽमृतम्

## शोधप्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य

## अनुसन्धान-प्रकाशन-विभागीया शोध-पत्रिका

- एषा त्रैमासिकी शोध-पत्रिका।
- अस्याः प्रकाशनं प्रतिवर्ष जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।
- अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।
- अस्यां श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।
- अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीका-टिप्पण्यादिपुरस्सरं प्रकाशनमप्यस्यां क्रियते।
- प्रकाशित-निबन्धः पत्रिकायाः एका प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।
- अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशित-शोधसामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्ण दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्यान वा प्रकाशकस्य।
- पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।
- अस्या एकाङ्कस्य मूल्यम् रु. 125.00, वार्षिकसदस्यताराशिः रु. 500.00 पञ्चवार्षिकसदस्यताराशिः रु. 2000.00, आजीवनसदस्यताराशिः रु. 5000.00
- सदस्यताराशि **कुलसचिव, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठ,** नई दिल्ली-16, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः वा ई-बैंकमाध्यमेन देयः।
- पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' शोध-प्रभा' श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-110016 इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

विज्ञानं तत्त्वबुभुत्सूनां महात्मनां शरणम्। यतश्च तस्मिन्नेव प्रतिभाति सर्वम्। तदेव निश्चित्य प्रक्रान्तमतयः मनीषिणः मनस्सामर्थ्यमवलम्ब्य सिद्धिं लभन्ते। तत्राप्युपाधिसंसर्गात् नैसर्गिकमायालेशोपजनितवैविध्यमासाद्य निर्मलमपि ज्ञानं चित्रमिव प्रतिभाति। उक्तञ्च यत्रोदितमिदं चित्रं विश्वं यत्रास्तमेति च तत्कुलं विद्धि सर्वज्ञ इत्यादि। अतः विचित्रेऽपि दृश्ये ऐक्यस्य सिद्ध्यर्थमुपायविशेषमेव परिचिन्तयन्ति विज्ञाः। तदेव विज्ञानमाप्तं स्तुत्यञ्च भवति। ममायं सिद्धान्तः गीतास्मृतिबलेन सर्वथैव पुष्ट इति प्रत्येति। तथा च वाक्यम्–सर्वभूतेषु येनैकं भावमक्षयमीक्षते। अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम्।

अनेन सत्वसमुर्जितचित्तेनास्पृष्टमपि गुह्यं तत्त्वमुद्भूतमिवानुभूयते। तथा च हृद्रूपायं गुहायां परमे व्योम्नि वा निहितं यथार्थं बुद्ध्वा स विद्वान् कृती भवति। श्रुतिश्च वदति– "आत्मास्य जन्तो निहतो गुहायाम्" अथ च "अन्तश्शरीरे ज्योतिर्मयो हि शुभ्रा यं पश्यन्ति यतयः क्षीणदोषाः" इति। अत्रैव दृष्टौ विश्वमेकनीडमिव सुधियां दृश्यभावमुपैति। तत्रैव सुकृतमासाद्य केचन पुण्यात्मानः आत्मनः साकल्यमर्जयन्ति। स्मरामि कठोपनिषदमत्र संदर्भे–

**ऋतं पिबन्तौ सुकृतस्य लोके। गुहां प्रविष्टौ पश्ये परार्ध्ये।। इति।**

अनेनैव सुकृतेन महात्मनां गुरूणाञ्च सत्काराय कश्चिद्भावविशेषः जन्यते। तदनुग्रहादेव दूरेऽवस्थितं वस्तु नेदीयस्त्वमिव तिष्ठति। इदमपि मामकीनं श्रुत्यनुरोधि एव। तदेवाह श्रुतिः–

**दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायामिति।**

अतस्तदर्थं सर्वैरपि यतनीयमेव। किञ्च यथासमयमाचरणपथः विमृश्य एव, कालस्यापि कारणेष्वन्यतमत्वात्। मन्येहमद्यत्वे तदेव पावनं कर्म पारे मतीनां विदुषां वृत्तस्य ज्ञानद्वारा अन्वेष्यमिति मत्वा तेषाञ्चरितमुद्भाव्य प्रकाशनाय कश्चिदुपायविशेषः निश्चप्रचं परिकल्पनीयः। तदेव अनवद्यमबाधितं कर्म इति मत्वा श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठं स्वप्रकाशनविभागद्वारा त्रैमासिकी शोधपत्रिका सातत्येन प्रकाशयति। अहं सर्वेषां पाठकानां सहयोगीनाञ्च मङ्गलमुपदिशे शुभञ्चाशंसे।

**प्रो. रमेशकुमारपाण्डेयः**
कुलपतिः

## सम्पादकीयम्

**आ याह्यग्ने समिधानो अवाङ् इन्द्रेण देवैः सरथो तुरेभिः।**
**वर्हिर्न आस्तामदितिः सपुत्रा।।**

ऋग्वेदीयोऽयं मन्त्रः अस्मानुपदिशति यद् यथा सूर्यः दूरातिदूरे विद्यमानान् भूमिस्थितानपि प्राणिनः स्वीयं प्रकाशं प्रयच्छति तथैव भवन्तोऽपि आचार्याः तीव्रबुद्धि-अल्पबुद्धि-मन्दबुद्धिबालकान् तेषां सामर्थ्यानुसारं यथा तेषां ग्रहणं भवेत् तथा ज्ञानं वितन्वन्तु। एक एवाचार्यः शिष्यानां बुद्धिस्तरं विलोक्य शिक्षां प्रददाति। अल्पमेधासम्पन्नश्चेत् तस्य कृते विधिरन्यः विशिष्टमेधासम्पन्नश्चेत् तस्य कृते अन्यो विधिः परिपाल्यते। अयमेव विधिरिदानीमपि शिक्षणसंस्थानेषु संस्थापनीयः। शिष्याणामुत्कर्षं गुरोः प्रभावादेव प्रसिद्धयति यदि शिष्यः योग्यः चेत् अकथनेनापि गुरोर्महत्त्वं वर्धते। शिष्यस्य विद्या गुरोः गौरवं प्रमाणयति अतएव लिखितं प्रतापविजयग्रन्थे

**शिष्याः यदुत्कर्षमवाप्नुवन्ति, प्रभाव एवैष गुरोरमोघः।**
**जातः प्रतापोद्धतकौरवाणां, कृष्णोपदिष्टो हि जयो विजेता।।**

योग्यशिष्यान् सम्प्राप्य गुरवः यशस्विनो भवन्ति, लिखितं च ऋग्वेदे-

**अग्ने भव सुषमिधा समिद्ध उत बर्हिरुर्विया विस्तृणीताम्।**

हे ज्ञानप्रदाता गुरो! यथा अग्निः उत्तमां समिधां सम्प्राप्य अत्यन्तं प्रज्वलति तथैव भवन्तोऽपि श्रेष्ठान् शिष्यान् सम्प्राप्य यशस्विनो भवन्तु, यथा जलं भूम्यां सर्वत्र प्रसरति तथैव भवन्तोऽपि स्वकीयं ज्ञानालोकं सर्वत्र प्रसार्य अज्ञानतमः विलीनयन्त्विति प्रार्थये। गुरुः स्वस्मिन् गुरुत्वं धारयति चेत् शिष्येषु सच्छिष्यत्वं स्वतः सम्भविष्यति।

शोधप्रभायाः प्रकृतेऽस्मिन्नङ्के नैकविधविषयगाम्भीर्यमण्डिताः एकोनविंशतिः शोधनिबन्धाः प्रकाश्यन्ते। प्रखरप्राञ्जलप्रतिभासम्पन्नैः नदीष्णैः सुधीभिः अनुसन्धानपद्धतिमाश्रित्य तत्तद्विषयेषु गवेषणापूर्वकं मौलिकमपूर्वञ्चान्वेषणमनुष्ठितम्। अनुसन्धानपथि प्रवृत्तानामाचार्याणामनुसन्धातृणाञ्च प्रतिभाप्रगल्भेन शोधप्रभायाः 'प्रभा' सर्वत्र विलसत्विति कामयमानोऽहं निकषधिषणापूरितविषयवस्तुजातस्य प्रकाममुद्बोधनाय सम्प्रार्थये सरस्वतीसपर्यापरान् सुमनसः मनीषिणः।

**प्रो.शिवशङ्करमिश्रः**
**शोधविभागाध्यक्षः**




# विषयानुक्रमणिका

## संस्कृतविभागः

## हिन्दी विभाग



## English Section

UGC - CARE Listed
**शोधप्रभा**
**अक्टूबर-दिसम्बर, 2019**
वर्ष : 44, चतुर्थोऽङ्कः

# पूर्वोत्तरमीमांसादर्शनयोर्देवतातत्त्वम्

**प्रो. रामानुज उपाध्यायः***

अस्मिन् जगति समेऽपि प्राणिनः आनन्दापरपर्यायं सुखं समीहमाना दृश्यन्ते इति नास्ति तिरोहितं विज्ञैः। इत्यत्र जीवस्य ईश्वरांशत्वमेव प्रामुख्यं भजते। ईश्वरो हि सच्चिदानन्दमयः-

**सच्चिदानन्दरूपाय विश्वोत्त्पत्यादिहेतवे।[1]**
**तापत्रयविनाशाय श्रीकृष्णाय वयं नुमः।।**

अस्य च अंशोऽयं जीवः -

**ईश्वर अंश जीव अविनाशी। चेतन अमल सहज सुखराशी।।[2]**

अस्माकं सर्वाणि शास्त्रणि अपि ऐकान्तिक-आत्यन्तिकतया च दुःखनिवृत्तिपूर्वकं सुखावाप्तये सातत्येन प्रवृत्तानि सन्तीति तत्तच्छास्त्रावलोकनेन स्पष्टतया विज्ञायते। तदिदं सुखं कथं प्राप्येत्? इति जिज्ञासायां ''सुखे हि हेतुः धर्मः। तथोदीरितं भगवता व्यासेन- प्राणिनां च सुखप्राप्तये धर्मो विधीयते दुःखपरिहाराय चाधर्मः प्रतिषिध्यते।[3] आचार्यचाणक्येनापि-सुखस्य मूलं धर्मः इति उदीरयामास। पुनश्चात्र जिज्ञास्यते को हि धर्मः? यश्च सुखमूलकः। तत्र धर्मप्रतिपादकं शास्त्रं मीमांसाशास्त्रं, यतः शास्त्रस्यास्य धर्मप्रतिपादनमेवैकं परमं प्रयोजनम्। तथाचोक्तं श्लोकवार्तिके ''धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्''।[4] धर्मस्य एतादृशं प्रतिपादनं नान्यत्र क्वचिदन्येषु शास्त्रेषु उपलभ्यते। तेनादौ मीमांसानुरोधेन अतिप्रसिद्धत्वात् अर्थसंग्रहकारस्य लक्षणमिहोपस्थाप्यते। को धर्मः? किं तस्य लक्षणं? उच्यते यागादिरेव धर्मः।[5] अत्र आदि पदेन दानहोमादयो द्रव्यगुणादयश्च ग्राह्या भवन्ति इति सारविवेचनीकारस्य आशयः। अस्येदं तात्पर्यम् 'श्रुतिः श्रेयस्करत्वेन यं धर्म ब्रवीति स अस्माकं धर्मः। तथा च श्रुतिः ''तानि धर्माणि प्रथमान्यासन्। ''एवं यागादीनामेव धर्मत्वमिति शास्त्रस्यास्य सिद्धान्तः। अतएवाग्रे'' वेदप्रतिपाद्यः प्रयोजनवदर्थो

---

* आचार्यः, वेदविभागः श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली

1. श्रीमद्भागवतम्1-1
2. श्रीरामचरितमानस (उत्तरकाण्ड) 116
3. ब्रह्मसूत्र (शाङ्करभाष्य 1-3-30)
4. श्लोकवार्तिक -11
5. अर्थसंग्रह (पृष्ठ-10)

धर्मः'' उच्यते। अर्थात् वेदप्रतिपाद्यत्वे सति प्रयोजनवत्त्वे च सति अर्थत्वं धर्मस्य लक्षणम्। लक्षणमिदं यागादौ समन्वेति। तेन यागस्य वेदविहितत्वात् धर्मत्वं सिध्यति। पुनर्जिज्ञासते को हि यज्ञः? तत्र उच्यते ''यज्ञस्य द्वे रूपे द्रव्यं देवता च।'' त्यज्यमानद्रव्योद्देश्यत्वं देवतात्त्वम्। अर्थात् विहितदेवतामुद्दिश्य विहितद्रव्यस्य त्यागो याग इति।[1] द्रव्यस्य प्रत्यक्षत्वात् तद् विधानं तु सुतरां समवलोक्यते परञ्च देवतानाम् अलौकिकत्वात् प्रत्यक्षतया दर्शनं न जायते, तर्हि अत्र देवतानां विषये जिज्ञासा-भवति। एतत् समाधानार्थम् आचार्ययास्कप्रोक्तं देवतालक्षणम् उच्यते। आचार्ययास्केन निरुक्ते देवशब्दः चतुर्धा व्युत्पादितः-''देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवति।''[2] एषु दीपन-द्योतन द्युस्थाननिरूपातिस्त्रो व्युत्पत्तयः दिवुधातोरर्थमेवानुसरन्ति, यतः दीप्तिद्युतिद्युलोकानां संबन्धः कान्तिमता देवेन यह संघटते, किन्तु दा धातुना देव शब्दस्य निर्वचनं विशेषार्थं व्यनक्ति। अत्र यजमानः यज्ञानुष्ठानेन देवान् भावयति, देवाश्च तस्मै स्वर्गादिभोग्यवस्तूनि प्रददति। सैषा प्रदानक्रिया यत्र विद्यते स देव इति बोध्यः। निरुक्तकारमते देवता विग्रहवती भवति। पश्चाच्च ''अपि वा उभयविधा स्युः'' इत्यनेन देवतानां सगुणनिर्गुणभेदेन उभयरूपत्त्वं तैश्च सप्रमाणं साधितम्।

इदानीं पूर्वमीमांसानुरोधेन देवतास्वरूपं पुरस्क्रियते। महर्षिजैमिनिना प्रवर्तितमिदं शास्त्रं ''द्वादशलक्षणीति पदेनाऽपि अभिधीयते। अस्य मते शब्दमयी देवता एव स्वीकार्या वर्तते। इन्द्राय स्वाहा, अग्नये स्वाहा इत्यादि मन्त्रवाक्येषु चतुर्थ्यन्तपदात्मको देवः। कर्मणा एव फलप्राप्तिः न तु कश्चन फलप्रदेवविशेषः। तथोदीरितं शास्त्रदीपिकायां - ''फलदायित्वेऽपि न देवतायाः प्रयोजकत्वं नापि प्राधान्यम्।'' अत्र विचार्यते किं यागो देवताराधनार्थः अस्याश्चाराधितायाः एतदेव फलम्? उत अपूर्वद्वारं यागस्य साधनत्वम् इति। अस्य समाधाने आचार्यमिश्रेणैवं प्रोक्तम्-

**इन्द्रादेः संप्रदानत्वात् कर्मणोऽपि प्रधानता।**
**यागः पूजा तदंगं स्यात् अतिथेर्भोजनं यथा।।**
**यागश्च साध्यरूपत्वात् साधनत्वेन देवताम्।।**
**गृह्णाति सिद्धरूपा च देवता तस्य साधनम्।।**[3]

अर्थात् यागश्च साध्यः देवता च साधनरूपा। प्रीयमाणोऽपि अतिथिः आराधयित्रे स्वर्गादि न प्रददाति। यद्यपि देवता विग्रहवती भुक्त्वा तृप्यति प्रसीदति च। तथापि यागादेव फलप्राप्तिः। यद्यपि देवता विग्रहवती, तथापि सा अनित्या स्यात्। ततश्च नित्यवेदविषयत्वं न स्यात्। न हि तस्याः प्रसादात् स्वर्गादिफलमुपलभ्यते एतत्तु कर्मण एव फलं गम्यते। मन्दधियस्तु श्रद्धालवः तात्पर्यमजानाना भ्राम्यन्तु नाम। एवं पूर्वमीमांसादर्शने शब्दमयत्वं देवतात्वं स्वीकृतमस्ति। देवताबलाबलनिरूपणे इदमप्युक्तं-

1. मीमांसान्यायप्रकाशः पृष्ठ-226
2. निरूक्तम् (दैवतकाण्डम् 7-4)
3. शास्त्रदीपिका (देवताधिकरणम्)

**तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।**
**देवताया विधिस्तत्र दुर्बलं तु परं परम्।।[1]**

पुनरत्र जिज्ञास्यते –यागस्तु क्षणिकः। किं विनष्टस्यापि यागस्य स्वर्गोत्पादनमुचितं? अस्य समाधाने पूर्वाचार्यैः इत्थं प्रक्रिया दर्शिता। प्रथमं तावत् फलवाक्येन कर्मणः फलसाधनता बोध्यते –यागेन स्वर्गं कुर्यात्? कथं विनश्वरेण यागेन फलं कर्तव्यं? अपूर्वं कृत्वा इत्युच्यते। कथमपूर्वं विधीयते? यागानुष्ठानप्रकारप्रक्रियाद्वारा। तच्चापूर्वंदर्शपूर्णमा-योरनेकविधम्। फलापूर्वं, समुदायापूर्वं, उत्पत्यपूर्वं अङ्गापूर्वमिति क्रमेण। तथोदीरितं माधवाचार्येण–

**क्षणिकस्य विनष्टस्य स्वर्गहेतुत्वकल्पनम्**
**विरुद्धं–मान्तरेणातः श्रेयोऽपूर्वस्य कल्पनम्।**
**अवान्तरव्यापृतिर्वा शक्तिर्वा यागजोच्यते**
**अपूर्वमिति तद्भेदः प्रक्रियातोऽवगम्यताम्।।[2]**

एवमिह फलप्राप्तये अपूर्वस्य कल्पनं श्रेयः परञ्च देवादीनां फदातृत्वं एतैः न स्वीकियते।

अत्र इदमप्यवधेयं यत् केचन आचार्याः देवानां विग्रहवत्त्वं न स्वीकुर्वन्ति यथा शबरस्वामी, पार्थसारथिमिश्रादयः। कुमारिलभट्टप्रभृतयस्तु विग्रहत्वं अनित्यत्वेन स्वीकुर्वन्ति? एतेषामायमाशयः।

**यागादेव फलं तद्धि शक्तिद्वारेण सिध्यति**
**सूक्ष्मशक्त्यात्मकं वा तत्फलमेवोपजायते।[3]**

अर्थात् भाट्टमीमांसकाः सूक्ष्मशक्तित्वेन देवतां स्वीकुर्वन्ति। यदि शरीरधारित्वमेषां स्वीक्रियते चेत् एकस्मिन्नेव काले समायोजितेषु बहुषु यागेषु गमनं दुःशकमिति। तस्मात् सूक्ष्मशक्तित्वेन स्वीकरणीयम् इति एषां मतम्।

उत्तरमीमांसायां (वेदान्तदर्शने) तु पूर्वमीमांसकानां देवताविषयकं सर्वस्वरूपं पूर्वपक्षेण प्रस्तुत्य यथाविधि यथाप्रमाणं च खण्डयित्वा अष्टाभिः सूत्रैः देवतायाः फलदातृत्वं विग्रहादिमत्वं च सप्रमाणं भगवता व्यासेन सिद्धान्तितम्। तत्र प्रथमं सूत्रमस्ति– ''तदुर्पयपि बादरायणः सम्भवात्।''[4] सूत्रस्यास्य व्याख्यानावसरे भगवत्पादैरेवमभाणि–मनुष्याणामुपरिष्टात् ये देवादयः सन्ति सामर्थ्यमपि तेषां भवति। मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहत्वाद्यवगमात्। अतएव विद्याग्रहणार्थमिन्द्रस्य ब्रह्मचर्यत्वं छान्दोग्योपनिषदि एवं श्रूयते –एकशतं ह वै वर्षाणि मघवान् प्रजापतौ बह्मचर्यमुवास।[1] एतच्च इन्द्रस्य विग्रहवत्त्वे सत्येव संघटते बहुषु यागेषु युगपदेकस्येन्द्रस्य स्वरूपसन्निधानतानुपपत्तेरिति चेत् नायमस्ति विरोधः –एकस्यापि देवतात्मनः युगपदनेकस्वरूपप्रतिपत्तिः संभवति। यथा श्रुतौ ''इन्द्रो मायाभिः पुरुरूप

1. तन्त्रवार्तिकः 2-2-9
2. जैमिनीयन्यायमाला 2 -1-8-10
3. तन्त्रवार्तिकः 1-20

ईयते।'' स्मृतिरपि -आत्मनो वै शरीराणि बहूनि भरतर्षभ। योगी कुर्याद् बलं प्राप्य तैश्च सर्वैर्महीं चरेत्।[2] एवं यदि योगिनामपि युगपदनेकशरीरधारित्वमस्ति तर्हि किं वक्तव्यमाजानसिद्धानाम् देवानाम्। अनेकरूपप्रतिपत्तिसम्भवाच्च। एकैका देवता बहुभीरूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदंगभावं गच्छतीति। परैश्च न दृश्यते अन्तर्धानादिक्रियायोगात्। यथा बहुभिर्नमस्कुर्वाणो ब्राह्मणो युगपन्नमस्क्रियते तद्वत् यागस्य विग्रहवतीमप्येकां देवतामुद्दिश्य बहवः स्वं स्वं द्रव्यं युगपत् परित्यजन्तीति। विग्रहवत्त्वेऽपि देवतानां न किञ्चत् कर्मणि विरुध्यते।

अपि च विधिभिरेवेन्द्रादिदैवत्यानि हवींषि चोदयद्भिः अपेक्षितमिन्द्रादीनां स्वरूपम्। न हि स्वरूपरहिता इन्द्रादयश्च एतस्य आरोपयितुं शक्यन्ते नचैतस्यानारूढायै तस्यै तस्यै देवतायै हविः प्रदातुं शक्यते तथा चौक्तमैतरेयब्राह्मणे-यस्यै यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेत् वषट्करिष्यन्।[3] एतत्तु नहि शब्दमात्रमर्थस्वरूपे संभवति शब्दार्थयोरभेदात्। भवति हि अस्माकमप्रत्यक्षमपि चिरन्तनानां प्रत्यक्षम्। तथा च व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते-

**विग्रहो हविषां भोगः ऐश्वर्यं च प्रसन्नता।**
**फलदातृत्वमित्येतत् पञ्चकं विग्रहादिकम्।।**[4]

अर्थात् विग्रहः, हवि स्वीकारः, तद्भोजनेन तृप्तिः, प्रसादः, फलदातृत्वञ्च चेतनस्यैव पञ्चकमुचितं नतु शब्दात्मकजडदेवताभ्यः। तस्मात् उत्तरमीमांसाशास्त्रानुरोधेन देवतानां विग्रहवत्त्वं सगुणस्वरूपत्वं फलप्रदातृत्वञ्च सर्वथा सिद्धं भवति। तथा च श्रुतिरप्याह-

**देहि मे ददामि ते निमेधेहि नितेदधे।**
**निहारञ्चहरासि मे निहारन्निहराणि ते स्वाहा।।**[5]

अत्र इन्द्रो देवता ब्रूते हे यजमान! त्वं हविः देहि अपेक्षितं-पश्चात् तुभ्यं ददामि। मे निधेहि ते निदधे-निहारञ्च-मूल्येन यज्ञफलं मे प्रयच्छ। ते निहारं मूल्यभूतं हविः तुभ्यं नितरां समर्पयामि स्वाहा। एवं प्रकारेण बहूनि श्रुतिवाक्यानि यथाप्रसंगं तत्तत्स्थानेषु प्रोक्तानि सन्ति। विस्तरभयात् नेह प्रस्तूयन्ते। तदित्थं पूर्वोत्तरमीमांसादर्शनानुरोधेन देवतातत्वं यथामतीह विमृष्टमिति शम्।

---

1. ब्रह्मसूत्रम् 1-3-8-26
2. छान्दोग्योपनिषद् 8-11-3
3. ब्रह्मसूत्रम् (भामती) 1-3-8
4. ब्रह्मसूत्रम् (भामती) पृष्ठ 256
5. शुक्लयजुर्वेदः संहिता 3-40

UGC - CARE Listed | शोधप्रभा
अक्टूबर–दिसम्बर, 2019 | वर्ष : 44, चतुर्थोऽङ्कः

# विशिष्टाद्वैतमते ब्रह्मणः सर्वशब्दवाच्यत्वम्

**प्रो. के. अनन्तः***

कौषीतकीब्राह्मणे प्रतर्दनविद्यायां[1] ''प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च इत्यारभ्य वरं वृणीष्वेति वक्तारमिन्द्रं प्रति त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे इति प्रतर्दनेनोक्ते'' ''स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मा मायुरमृतमित्युपास्व'' इति श्रूयते। तत्र हिततमोपासन कर्मतया इन्द्रोच्चारित ''माम्'' शब्दनिर्दिष्टः किमिन्द्राख्योजीव उत तदतिरिक्तः परमात्मा इति विषये जीव इति पूर्वपक्षं कृत्वा तं निरस्य परमात्मेति स्थापयित्वा मामितिशब्देन कथं परमात्मनिर्देश इति शङ्कासमाधानायोक्तं सूत्रकारेण–''शास्त्रदृष्ट्या तूपदेशो वामदेववत्''[2] इति। तत्र च श्रीभाष्ये ''अनेनजीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि''[3], ''ऐतदात्म्यमिदं सर्वं''[4], ''अन्त:प्रविष्टश्शास्ता जनानां सर्वात्मा''[5] य आत्मनि तिष्ठन्नात्मनोऽन्तरः यमात्मा न वेद यस्यात्मा शरीरम्, य आत्मानमन्तरो यमयति एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः[6] इत्येवमादिना शास्त्रेण जीवात्मकशरीरं परमात्मानमवगम्य जीवात्मवाचिनां अहं त्वमादिशब्दानामपि परमात्मनि पर्यवसानं ज्ञात्वा ''मामुपास्व'' इति स्वात्मकशरीरं परमात्मानमेव उपास्यत्वेनोपदिदेश इति प्रतिपादितम्। एतेन सर्वे शब्दाः तत्तच्छरीरक परमात्मपर्यन्तवाचकाः इति स्वसिद्धान्त आवेदितः।

एवं साक्षादप्यविरोधं जैमिनिः इति सूत्रे[7] एवमग्निशब्देति अग्रनयनादिना येन गुणेन योजने ज्वलने वर्तते, तस्यैव गुणस्य निरूपाधिकस्य काष्ठागतस्य परमात्मनि संभवात् अस्मिन्प्रकरणे परमात्मासाधारणधर्मविशेषितः परमात्मानमेवाभिधत्त इति भाष्येण सर्वे शब्दाः योगव्युत्पत्या परमात्मवाचका इति पक्षान्तरमुपन्यस्तम्।

---

* विशिष्टाद्वैतवेदान्तविभागाध्यक्षः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली

1. कौ.उ.3-1
2. ब्र.सू.1-1-30
3. छा.उ.6-23
4. छा.उ.6-24
5. तै.आ.3-11
6. सु.उ.3-66
7. ब्र.सू.1-2-29

तत्र श्रुतप्रकाशिकायां ''सामान्येन परमात्मपरतया तात्पर्यलिङ्गैरवगतेषु प्रकरणेषु अर्थान्तररूढशब्दानां परमात्मपरत्वेऽवश्यंभाविनि सति अवयवशक्त्या साक्षादेव तत्परत्वं वर्णनीयमित्येवं रूपं जैमिनिमतं नैतत्प्रकरणविशेषविषयम्। अस्य च न्यायस्य सामान्येनोपजीव्यतया यत्र क्वचिद्वक्तव्यत्वे सति अत्र परमात्मपर्यन्तत्वनिर्वाह प्रसङ्गादिहाभ्यधायि'' इति अनुगृहितम्। अनेन लिङ्गान्तरैः परमात्मपरत्वे निश्चिते सति परमात्मनि प्रयुक्तः अर्थान्तररूढश्शब्दः शरीरात्मभावेन वा योगशक्त्या वा परमात्मवाचक इति सिद्धान्तः। अनेन परमात्मनि प्रसिद्धानां ब्रह्मादिशब्दानां परमात्मवाचकत्वं कैमुत्यन्यायसिद्धम्। किञ्च ''तस्योदितिनाम'', ''अथ नामधेयं सत्यस्य सत्यम्''इत्यादिश्रुतिरेव परमात्मवाचकतया कांश्चित् शब्दान्निर्दिशति। उक्तं च तत्त्वमुक्ताकलापे।[1]

**वाचव्यत्वं वेद्यतां च स्वयमभिदधाति ब्रह्मणोऽनुश्रवान्ताः,**
**वाक्चित्तागोचरत्वश्रुतिरपि हि परिच्छित्त्यभावप्रयुक्ता।**
**नो चेत्पूर्वापरोक्तिस्ववचनकलहस्सर्ववेदान्तबाध-**
**स्तत्सिद्धिर्हेतुभिश्चेत्प्रसजति विहतिर्धर्मिसाध्यादिशब्दैः।।** इति

वेदार्थसङ्ग्रहे च यस्य पदार्थस्य यं पदार्थं प्रति अपृथक्सिद्धिस्तद्वाचकशब्दस्य स्वाश्रयवाचकत्वं तत्प्रयुक्तमाश्रयीभूतार्थवाचकपदसामानाधिकरण्यम्, विभिन्नप्रवृत्तिनिमित्तनिष्ठ-प्रकारतानिरूपितैकार्थनिष्ठविशेष्यताकबोधजनकत्वं तत्प्रयुक्तं समानविभक्तित्वम्, यस्य पदार्थस्य कश्चित् पदार्थं प्रति पृथक्सिद्धिः कदाचित् संयोगः प्रकारतया भानं वा तद्वाचकशब्दस्य न स्वाश्रयपर्यन्तशक्तिमत्वम्, अपि तु मत्वर्थीयप्रत्ययेनाश्रयाभिधायित्वम् इति व्यवस्था। एवं पूर्वप्रकारेण सर्वस्य वस्तुन ईश्वरशरीरतया ईश्वरप्रकारतयैव तद्वस्तुस्वरूपसद्भावः, इति तत्प्रकारीभूतस्थावरजङ्गमात्मकवस्तुप्रकार ईश्वर एव, तत्तच्छब्देन जगत् सर्वम्, इदम्, शक्ति-अंश-जल-स्थल-पर्वतादि श्रुतिगत-शब्दैर्घटादिशब्दैश्चाभिधीयते। तत्सामानाधिकरण्ये-नेश्वरैकार्थप्रतिपादकत्वेन सर्ववस्तुवाचकतत्तच्छब्दनिष्ठेन प्रतिपादनं बोधनं युक्तम्। तदेतत्सर्वं नामश्रुतिविवरणे निरुक्तप्रकारो नामश्रुति ''रनेन जीवेनात्मनानुप्रविश्ये''[2] त्यस्य व्याख्याने विस्तृतम्। अतः सर्वशब्दानां स्वार्थप्रसिद्धप्रकारतया ब्रह्मवाचकत्वादेव प्रकृति-पुरुषमहदहङ्कारादिः प्रकारो विशेषणम्। संस्थानमाकृतिः, तदीयासाधारणधर्मः, तेन संस्थानेन विशिष्टं कार्यं समस्तभुवनं ब्रह्मैवेति महदादिशब्दानां यदि ब्रह्माभिधायित्वम्, तदा महदाद्यर्थोऽपि ब्रह्मपर्यन्त इति कारणभूतब्रह्मविज्ञानादेव विविधप्रपञ्चस्यापृथक्सिद्ध-विशेषणरुपेणोपादानभूतस्य स्वरूपतो निमित्तकारणभूतस्य ब्रह्मणो विज्ञानात् शाब्दबोधपूर्वकं स्मृत्युभयासेन प्रत्यक्षात्मकात्। इति यथोक्तं भगवता पराशरेण-

**''प्रधानपुंसोरजयोः कारणकार्यभूतयोः'' इति।**

---

1. तत्त्वमुक्ताकलापे नायकसरे श्लोकः-3
2. छा.उ.6-2-3

तस्मादीश्वरप्रकारभूतसर्वावस्थप्रकृतिपुरुषवाचिनः शब्दाः तत्प्रकारविशिष्टतयाऽवस्थिते परमात्मनि मुख्यतया वर्तन्ते, जीवात्मवाचि देवमनुष्यादिशब्दवत्। यथा देवमनुष्यादिशब्दा देवमनुष्यादिप्रकृतिपरिणामविशेषाणां जीवात्मप्रकारतयैव पदार्थत्वात् प्रकारिणि जीवात्मनि मुख्यतया वर्तन्ते, तस्मात् सर्वस्य चिदचिद्वस्तुनः परमात्मशरीरतया तत्प्रकारत्वात् परमात्मनि मुख्यतया वर्तन्ते सर्वे तद्वाचकाः शब्दाः। अयमेव चात्मशरीरभावः, पृथक्सिद्ध्यनर्हाधाराधेयभावो नियन्तृनियाम्यभावः, शेषशेषिभावश्च। सर्वात्मनाधारतया नियन्तृतयाशेषितया च आप्नोतीत्यात्मा, सर्वात्मनाधेयतया नियाम्यतया शेषतया चापृथक्सिद्धप्रकारभूतमित्याकारः शरीरमित्युच्यते। अयमेव हि जीवात्मनः शरीरसम्बन्धः। एवमेव परमात्मनः सर्वशरीरत्वेन सर्वशब्दवाच्यत्वम्।

तदाह श्रुतिगणः – "सर्वे वेदा यत्पदमामनन्ति, सर्वे वेदा यत्रैकं भवन्ति"[1] इति तस्यैकस्य एकार्थवाचिनो भवन्ति। "एको देवो बहुधा सन्निविष्टः, सहैव सन्तं न विजानन्ति देवाः" इत्यादि। देवा इन्द्रियाणि – देवमनुष्यादीनामन्तर्यामितयाऽऽत्मत्वेन निविश्य सहैव सन्तं तेषामिन्द्रियाणि मनःपर्यन्तानि न विजानन्तीत्यर्थः। तथा च पौराणिकानि वचांसि– "नताः स्म सर्ववचसां प्रतिष्ठा यत्र शास्वती, वाच्ये हि वच्मः प्रतिष्ठा, कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम्, वेदैश्च सर्वैरहमेव वेद्यः" इत्यादीनि सर्वाणि वचांसि सशरीरात्मविशिष्टमन्तर्यामिणमेवाचक्षते। "हन्ताहमिमास्तिस्रो देवताः, अनेन जीवेनात्मनानुप्रविश्य, नामरूपे व्याकरवाणि" इति हि श्रुतिः। तथा च मानवं वचः –

**प्रशासितारं सर्वेषामणीयांसमणीयसाम्।**
**रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्।।[2]**

अन्तःप्रविश्य अन्तर्यामितया सर्वेषां प्रशासितारं नियन्तारमणीयांस आत्मानः। कृत्स्नस्याचेतनस्य व्यापकतया सूक्ष्मभूतास्तेषामपि व्यापकत्वाम् तेभ्योऽपि सूक्ष्मतर इत्यर्थः। रुक्माभमादित्त्यवर्णं स्वप्नधीगम्यं स्वप्नकल्पबुद्धिप्राप्यमित्यर्थः। विशदतमप्रत्यक्षतापन्ना बुद्ध्या नैकलभ्यमित्यर्थः।

**एनमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम्।**
**इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्।।[3]**

एके वेदा इत्यर्थः, उक्तरीत्या परस्यैव ब्रह्मणः सर्वस्यैव प्रशासितृत्वेन सर्वान्तरात्मतया प्रविश्यावस्थिततत्वात्। अग्न्यादयोऽपि शब्दाः शाश्वतब्रह्मशब्दवत् तस्यैव वाचका भवन्तीत्यर्थः। तथा च स्मृत्यन्तरः –

**ये यजन्ति पितृन्देवान् ब्राह्मणान् सहुताशनान्।**
**सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते।।[4]** इति।

1. तै.आ.1–13
2. वेदार्थसंग्रहः
3. वेदार्थसंग्रहः
4. वेदार्थसंग्रहः

पितृदेवब्राह्मणहुताशनादिशब्दास्तन्मुखेन तदन्तरात्मभूतस्य विष्णोरेव वाचका इत्युक्तं भवति।

वस्तुतस्तु प्रपञ्चगतपदार्थवाचकाः सर्वे शब्दाः परमात्मपर्यन्तवाचिनः। तेषां परमात्मपर्यन्तवाचित्वं तु वेदान्ताध्ययनानन्तरमेव ज्ञायते। अत एव वेदान्तेन व्युत्पत्तिः पूर्यत इति प्रवादः। ''गामानय'' इत्यादौ तु विशिष्टवाचिनः शब्दस्य विशेषणमात्रे विभज्यप्रयोगः। तदुक्तं तत्त्वमुक्तकलापे बुद्धिसरे[1]

**निष्कर्षाकूतहानौ विमतिपदपदान्यन्तरात्मानमेकं**
**तन्मूर्तेर्वाचकत्वादभिदधति यथा रामकृष्णादिशब्दाः।**
**सर्वेषामात्ममुख्यैरगणि च वचसां शाश्वतेऽस्मिन् प्रतिष्ठा,**
**पाकैस्तस्याप्रतीतेर्जगति तदितरैः स्याच्च भङ्क्त्वा प्रयोगः।।** इति

भावः -

विप्रतिपन्नानि प्रपञ्चवाचकानि पदानि परमात्मवाचकानि निष्कर्षकेतरत्वे सति तन्मूर्तिवाचकत्वात्। ये निष्कर्षकेतरत्वे सति भगवन्मूर्तिवाचकास्ते भगवद्वाचकाः यथा रामकृष्णादिशब्दा इति विशेषतो व्याप्तिः। सामान्यतोऽपि ये निष्कर्षकेतरत्वे सति यन्मूर्तिवाचकास्ते तद्वाचकाः यथा देवमनुष्यादि शब्दा इति। आप्तमुख्यैर्महर्षिभिः सर्वेषां वचसां शाश्वते-भगवति प्रतिष्ठा-पर्यवसानमगणि। वचसां वाच्यमुत्तमम्, नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वते इत्यादीनि प्रमाणानि सहस्रशस्सन्ति, वेदैश्च सर्वैरहमेव वेद्य इति स्ववचनमपि। विद्वद्भिरपि विशेषणमात्रे क्वचितत्क्वचित् भङ्क्त्वा प्रयोगः। विशिष्टवाचिनश्शब्दस्य विशेषणमात्रे विभज्य प्रयोग इत्यर्थः। अत्र दर्शनद्वयमस्ति गोत्वादिकं प्रवृत्तिनिमित्तीकृत्यप्रवर्तमानाश्शब्दास्साक्षात्परम्परासाधारणसम्बन्धेन प्रवृत्तिनिमित्तेन व्युत्पन्ना-स्समानप्रकारेणसद्वारकाद्वारकाश्रयद्वयमपि बोधयन्तीति प्रथमं मतम्। देवत्वादिकमादाय तदाश्रये एका शक्तिः। तथा देवादिविशिष्टे ब्रह्मण्यपराशक्तिः। यथा नीलत्वमादाय रूपे एकाशक्तिः। नीलरूपमादाय तदाश्रयाऽपराशक्तिरिति द्वितीयं मतम्।

तथा च सर्वेषां शब्दानां मुख्यवृत्त्या ब्रह्मवाचित्वात्। यथोक्तंश्रीमतीभाष्ये चराचरव्यपाश्रयसूत्रे तद्व्यपदेशः चराचरवाचिशब्दः ब्रह्मण्यभाक्तः मुख्य एव कुतः तद्भाव भावित्वात् - ब्रह्मभावभावित्वात् सर्वशब्दनां वाचकभावस्य इति।

चराचरप्रपञ्चवाचिनां, सर्वेषां शब्दानां तत्तच्छरीरके परमात्मनि मुख्यत्वात्। लोके ''ब्राह्मणोऽधीते ''ब्राह्मणो विद्वान्'' इत्यादिप्रयोगेषु, वेदे ''ब्राह्मणमुपनयीत'', ''ब्राह्मणो यजेते'' त्यादिषु प्रयोगेषु च शरीरवाचिशब्दानां शरीरिपर्यन्तत्वस्य व्युत्पत्तिसिद्धत्वात्। सर्वस्य चराचरस्य परमात्मशरीरतायाः अन्तर्यामिब्राह्मणेन ''अनेन जीवेनात्मनाऽनुप्रविश्यनामरूपे व्याकरवाणि'' इति तेज आद्यनुप्रवेशपूर्वकनामरूपव्याकरण श्रुत्या चावगमात्।

1. तत्वमुक्तकलापे बुद्धिसरे 85 श्लोकः

चराचरविषयकव्युत्पत्तेः लोकक्लृप्तायाः अत्यागात्। यथा कश्चित् व्यक्तिमात्रे, आकृतिमात्रे वा प्रथमं व्युत्पाद्यपश्चादात्मपर्यन्ते व्युत्पद्यते, अथ च शरीरमात्रे तत्प्रयोगमुपचारकृतं मन्यते। यथोक्तं कणादेनापि[1] "देवदत्तो गच्छति यज्ञदत्तो गच्छति" इत्युपचारात् शरीरे प्रत्ययः इति - तथा लोके चराचरमात्रे व्युत्पाद्य पश्चात् शास्त्रे ब्रह्मपर्यन्तं व्युत्पद्यते। तथा च सर्वे शब्दाः ब्रह्मवाचकाः इति।

**उपयुक्तग्रन्थसूची-**

1. कौषीतिकोपनिषत्।
2. छान्दोग्योपनिषत्।
3. सुबालोपनिषत्
4. तैत्तिरीय-आरण्यकम्
5. ब्रह्मसूत्रम्।
6. तत्त्वमुक्तकलापः।
7. वेदार्थसंग्रहः।
8. वैशेषिकसूत्रम्।

********

1. वै.सू. 3-1-12

UGC - CARE Listed
अक्टूबर–दिसम्बर, 2019

शोधप्रभा
वर्ष : 44, चतुर्थोऽङ्कः

# न्यायदर्शनीयविशिष्टशक्तिवादविमर्शः

डॉ.रामचन्द्रशर्मा*

**"प्रमाणैरर्थपरीक्षणं न्यायः"**[1] प्रमाकरणं प्रमाणं, यथार्थानुभवः प्रमा, प्रमाणानि चत्वारि। तद्यथोक्तं महर्षिणा गौतमेन–

**" प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि"**[2]

तत्र प्रत्यक्षप्रमाकरणं प्रत्यक्षं, इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। तत्र इन्द्रियाणि करणानि, सन्निकर्षाः व्यापाराः, प्रत्यक्षप्रमा फलम्। अनुमितिकरणमनुमानम्। परामर्शजन्यं ज्ञानमनुमितिः। व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। साहचर्यनियमो व्याप्तिः। व्याप्यस्य पक्षवृत्तित्वं पक्षधर्मता। अत्र व्याप्तिज्ञानं करणं, परामर्शो व्यापारः, अनुमितिः फलम्। उपमितिकरणमुपमानम्। संज्ञासञ्ज्ञिसम्बन्धज्ञानमुपमितिः। अत्र सादृश्यज्ञानं करणं, अतिदेशवाक्यार्थस्मरणं व्यापारः, उपमितिः फलम्। शाब्दप्रमाकरणं शब्दः, शाब्दप्रमा च वाक्यार्थबोधरूपा, तत्र पदज्ञानं करणं वृत्त्या पदजन्यपदर्थोपस्थितिर्व्यापारः, पदार्थान्वयबोधरूपा शाब्दप्रमा फलम्। तद्यथोक्तम्–

**पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः।**
**शाब्दबोधः फलन्तत्र शक्तिधीः सहकारिणी।।**[3]

पदपदार्थसम्बन्धरूपा वृत्तिः शक्तिर्लक्षणा च।

सर्वोऽपि व्यापारः शब्दप्रयोगात्मक एव। भाषयैव लोव्यवहारः प्रचलति। तद्यथोक्तम्–

**इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।**
**वाचामेव प्रसादेन लोकयात्रा प्रवर्तते।।**
**इदमन्धतमः कृत्स्नं जायते भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।**[4]

तथाच शब्दप्रमाणमत्यन्तमहत्त्वपूर्णं तच्च आप्तवाक्यरूपं, आप्तो यथार्थवक्ता, आकांक्षादिपदसमूहो वाक्यं, शक्तं पदम्। साधुपदनिरूपिता शक्तिरर्थे भवति! सा चेश्वरेक्षास्वरूपिणी! ज्ञानेच्छाकृतयः सविषयका भवन्ति! तथा च विषयतासम्बन्धेन यथा ज्ञानं विषये तिष्ठति तथैव इच्छापि विषये तिष्ठति! "अस्मात् पदादयमर्थो बोद्धव्य"[1]

---

*सहाचार्यः– न्यायवैशेषिकविभागः, श्री.ला.बा.शा. रा. स. वि. नवदेहली–110016

1. न्यायभाष्यम्। (1/1/1), 2. न्यायदर्शनम् (1/1/3)
3. कारिकावली (शब्दखण्ड:1), 4. काव्यादर्शः– (1/3–4)

इतीश्वरसङ्केतरूपाया इच्छाया अर्थस्तावदित्थम् **"एतत्पदजन्यबोधविषयतावान् अर्थो भवतु"** इति। **"व्यक्त्याकृतिजातयस्तु पदार्थः"**[2] इति गौतमपरिभाषया पदार्थस्य जात्याकृतिविशिष्टत्वेन, तादृश व्यक्तावेव पदानां शक्तिरिति न्यायसिद्धान्तः।

अत्रेदं बोद्ध्यम् - पदार्थाः धर्मधर्मिभावेन गृह्यन्ते, जात्यादयों धर्माः तदाश्रया धर्मिणः, धर्मधर्मिसम्बन्धोऽपि समवायादिस्तत्र निविष्टः। पदसङ्केतः कुत्र ग्राह्यो,? व्यक्तौ,? जातौ.? आकृतौ? वा इति प्रश्नः समुदेति। तत्र केचिद् व्यक्तिशक्तिवादिनः, केचिज्जातिशक्ति-वादिनः, केचिदाकृतिशक्तिवादिन, केचिच्च विशिष्टशक्तिवादिनः,।

**व्यक्तिशक्तिवादः-**

तत्र तावत् प्रथमतः शब्दशक्तिः व्यक्तावेव प्रतीयते, **'गामानय'** इत्यादिव्यवहारकाले व्यक्तेरेव तादृशानयनादिविशिष्टस्य प्रतीयमानत्वात्। अतः **"यत्परः शब्दः स शब्दार्थः"** इति न्यायेन गवादिपदानां प्रयोगे तादृशसास्नादिविशिष्टस्यैवार्थस्य प्रतीयमानत्वात्, स एव पदार्थः, तत्रैव पदानां शक्तिस्स्वीकार्येति केषाञ्चिन्मतम्। अत्र जातिशक्तिवादिनो मीमांसकाः। तद्यथा-

**"तत्र जातावेव शक्तिः, न तु व्यक्तौ व्यभिचारादानन्त्याच्च। व्यक्तिं विना जातिभानस्यासम्भवाद् व्यक्तेरपि भानम्"**- इति[3]

तात्पर्यमिदं यद् - व्यक्तिशक्तिवादोऽङ्गीक्रियते तदा विकल्पो भवति यद् - यस्यां कस्याञ्चिद् व्यक्तौ शक्तिः? सर्वासु व्यक्तिषु वा? इति। तत्र यदि यस्यां कस्याञ्चिद् व्यक्तौ शक्तिस्तदा केवलं तस्या एव भानं पदेन स्यात्! अन्यस्या व्यक्तेर्भानं तेन पदेन न स्यात्! शक्तिमत्पदार्थस्यैव पदवाच्यत्वात्, शक्तिं विना तज्जातीयस्य अन्यस्य बोधासम्भवात्। यद्युच्यते यत् - तेनैव पदेनान्यस्यापि बोधो भविष्यतीति, तदा शाब्दबोधे व्यभिचारदोषः। यतो हि तत्र शक्तिग्रह आवश्यककारणम्, अन्यव्यक्तौ च शक्त्यभावे शक्तिग्रहो न भवितुमर्हति। शक्तिग्रहाभावेपि यदि पदार्थोऽपस्थितिपूर्वकशाब्दबोधोऽङ्गीक्रियते तदा "कारणाभावे कार्यसत्त्वम्"- इति कारणतायां व्यतिरेकव्यभिचार आपतति। तथा च यस्यां कस्याञ्चिद् व्यक्तौ शक्तिर्नाङ्गीकर्तुं शक्या।

यद्युच्चेत यत् - सर्वासु तज्जातीयासु व्यक्तिषु पदानां शक्तिरङ्गीक्रियते, तथा च सर्वत्र शक्तिसत्त्वेन न शक्तिग्रहाभावः, तेन च न व्यभिचार इति, तदा प्रत्येकस्यां व्यक्तौ पृथक् पृथक् शक्तिस्वीकारस्यावश्यकतया शक्तेरानन्त्यमङ्गीकार्यम्। तथा सति शक्तेरानन्त्यान्न कार्यकारणभावानुगमः। अतः केवलव्यक्तौ शक्तिर्नैवाङ्गीकर्तुं शक्या इति विभावनीयम्।

**जातिशक्तिवादः**

व्यभिचारदानन्त्याच्च व्यक्तिशक्तिवादः कथमपि न सङ्गच्छते। यत्र व्यक्तेरैक्यं तत्रैव व्यक्तौ शक्तिः स्वीकार्या, यत्र व्यक्तीनां बाहुल्यं, तत्र तद्वृत्तिजातिरूपधर्म एव शक्तिरङ्गीकार्या। येऽपि जातिविशिष्टे शक्तिं स्वीकुर्वन्ति तेषां मतेऽपि जातौ शक्तिग्रह

1. तर्कसङ्ग्रहः- (शब्दखण्डः)।
2. न्यायदर्शनम् (2/2/68)।, 3. न्यायसिद्धान्तमुक्तावली (शब्दखण्डः)।

आवश्यकः। तथा ह्युक्तं- **''नागृहीतविशेषणा बुद्धिर्विशिष्ट उपजायते''** इति। विशेषणज्ञानपूर्वकमेव विशिष्टज्ञानं सम्भवति, गोत्वज्ञानाभावे गोत्वविशिष्टस्य बोधः कथमपि वक्तुं न शक्यते। अतो जातीनां विशेषणतया प्रतीयमानत्वाद् विशिष्टज्ञानार्थं जातिप्रत्यय आवश्यकः। तथा च जातावेव पदानां शक्तिरस्तीति स्वीकार्यम्।

अत्र शङ्का समुदेति यद्-यदि जातावेव शक्तिस्तदा पदेन व्यक्तिभानं न स्यात्! व्यक्तौ पदशक्तेरनङ्गीकाराद्। **''गामानय''**- इत्यादिवाक्ये **''गोकर्मकमानयनङ्कार्यम्''** - इति शाब्दबोधः, तत्र आनयनकर्मताया अन्वयस्य साक्षाज्जातावसम्भवात्, तदर्थं व्यक्तिभानमावश्यकं, व्यक्तिं विना जातिभानस्यासम्भावाद् व्यक्तिभानमपि आक्षेपाज्जायते। जातिभासकसामग्र्या एव व्यक्तेरपि भानं स्वीकार्यम्। अतः व्यक्तिभानार्थं तत्र पदशक्तेरपेक्षा नास्तीति जातिशक्तिवादिनां मतम्।

**एतन्मतनिरासः-**

अत्र विषये नैयायिकः प्रतिवदति यद् - यदि व्यक्तौ पदशक्तिर्नाङ्गीक्रियते, तदा तस्य पदार्थत्वाभावेन शब्दबोधविषयता न स्यात्! वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितेरेव शाब्दबोधहेतुत्वात्! अतः शाब्दबोधे व्यक्तिभानार्थं तत्र शक्तिरवश्यमङ्गीकार्येति।

अत्र यदि वदेत यद्- व्यक्तेः शाब्दबोधे भानार्थं लक्षणा स्वीकार्या। शक्यार्थसम्बन्धस्तावल्लक्षणा। तत्र **''शक्यार्थान्वयानुपपत्तिः, तात्पर्यानुपपत्तिर्वा''** बीजम्। यथा **''गङ्गायां घोषः''** -इत्यत्र तादृशप्रवाहरूपे गङ्गापदशक्यार्थे घोषान्वयानुपपत्त्या, तात्पर्यानुपपत्त्या वा लक्षणया शक्यसम्बन्धितीररस्योपस्थितिः शाब्दबोधश्च भवति, तथैव **''गामानय''**- इत्यादावपि गोपदशक्ये **''गोत्वे''** आनयनरूपक्रियाया अन्वयानुपपत्त्या स्वीकार्यम्। तत्सम्बन्धिव्यक्तेर्बोधः लक्षणयैव भवितुमर्हति। अतो व्यक्तौ शक्तिस्वीकारो नावश्यकः इति।

तत्र युक्तम्। यतोहि -तत्र तादृशानुपपत्तिप्रतिसन्धानं विनापि व्यक्तेर्बोध आनुभविकः। व्यवहारकाले सर्वेऽपि शाब्दबोधे वृत्त्या पदजन्यपदार्थोपस्थितिमनुभवन्तः तादृशानुपपत्तिप्रतिसन्धानं नैव कुर्वन्ति। अत व्यक्तौ लक्षणाया नानुभवविपयता। **''तुष्यतुदुर्जनन्यायेन''** कदाचिद् **''गामानय''** इत्यादौ तादृशानुपपत्तिमङ्गीकृत्य लक्षणा अङ्गीक्रियेतापि, तथापि **''गौरस्ति''** इत्यादौ गोत्वादि जातेरास्तित्वान्वयः सर्वानुभवसिद्धः। अतो लक्षणाया नास्ति कथमप्युपयोगः। इत्थञ्च शाब्दबोधे सर्वत्र लक्षणाभ्युपगमस्यानावश्यकत्वाल्लक्षणया व्यक्तिबोधस्वीकारों नैव युक्तिसङ्गतः।

अत्र जातिशक्तिवादिनः पुन प्रतिक्षिपन्ति यद्- यदिं व्यक्तावेव शक्तिस्तदा व्यक्तीनामानन्त्यात् प्रतिव्यक्ति तादृशशक्तिकल्पने शक्तेरानत्यं स्यात्! तथा च न सार्वभौमिकः शक्तिग्रहः इति। तदप्यसङ्गतम्। यतो हि सकलव्यक्तिषु एकस्या एव शक्तेरङ्गीकारः, भगवदिच्छारूपायास्तस्याः सर्वत्रैक्येनावगाहनात्। अतो व्यक्तिभेदेऽपि न शक्तिभेदो न वाऽनन्त्यदोषप्रसक्तिरिति समवधारणीयम्।

अत्र पुनरप्याक्षिप्यते यद्- यदि सकलासु व्यक्तिषु एका एव शक्तिः

तदानन्त्यदोषाभावेऽपि व्यक्तीनां विभिन्नाकृतीनामननुगतत्वेन शक्तिज्ञानकारणतायां विषयतया तेषामवच्छेदकता न स्यात्। तथा च शाब्दबोधशक्तिज्ञानयोः कार्यकारणभावस्यानुगमो नैव भवितुमर्हतीति।

तदप्यसत्, गोत्वादिजातेरेवानुगमकधर्मत्वात्। तस्याः सकलव्यक्तिसाधारणतया सर्वोपस्थापकत्वात्। इत्थञ्च **"गोविषयकशाब्दवोधम्प्रति गोत्वविशिष्टविषयकं ज्ञानं कारणम्"** इति सामान्यकार्यकारणभावः। तथा च नाननुगमरूपो दोषः। एवं सर्वत्र जातेरेव तादृशानुगमकधर्मरूपताङ्गीकरात्सर्वं समञ्चसमिति न्यायसिद्धान्तः।

किञ्च - यदि **"गोत्वे"** गोपदस्य शक्तिस्तदा गोपदजन्यगोत्वप्रकारकस्मरणं न स्यात्! शक्तिज्ञानस्य समानप्रकारकत्वेन पदार्थस्मरणं शाब्धबोधं प्रति च हेतुत्वात्। तात्पर्यमिदं यत्-"यत्प्रकारकं यद्विशेष्यकं शक्तिज्ञानं भवति, तद्विशे तत्प्रकारकं तशिष्यकं स्मरणं" इति शक्तिग्रहो भवति, तदा तु गोत्वप्रकारकगोविशेष्यकशक्तिज्ञानं, गोत्वप्रकारकपदार्थस्मरणं, गोत्वप्रकारकगोविशेयकश्च शाब्दबोधो भवतिमर्हति। किन्तु यदि "गोत्वं गोपदशक्यम्"- इति शक्तिग्रहोऽभ्युपगम्यते, तदा न गोत्वप्रकारकशक्तिज्ञानं, न वा गोत्वप्रकारकस्मरणम्। गोत्वप्रकारकशाब्दबोधस्य तु सम्भावनैव नास्ति। अतः **"गोत्वे"** - शक्तिस्वीकारे गोत्वप्रकारशाब्दबोधस्यानुपपत्त्या न कथमपि तत्र शक्तिस्स्वीकर्तुं शक्यते।

अपि च यदि **" गोत्वं गोपदशक्यम्"**- इत्येवं शक्तिग्रहोऽङ्गीक्रियते तदा **"शक्यता" " गोत्वे"** स्वीकार्या, तत्र शक्यतावच्छेदकं गोत्ववृत्तिधर्मः **"गोत्वत्वम्"!** तत्र किन्नाम "गोत्वत्वम्"? "गवेतरासमवेतत्वे सति सकलगोसमवेतत्वम्"! अर्थात् गोत्वे विद्यमानो धर्मः यद् "गोत्वत्वम् "अस्ति, तत्तावत् गवेतरमहिषादौ समवायसम्बन्धेना एवं वृत्तिरास्ति एवं सकलगोव्यक्तिषु समवेतमस्ति। सति। सकलगोसमवेतत्वरूपस्य गोत्वत्वस्य शरीरे सकलगोव्यक्तीना प्रवेशात् शक्यतावच्छेदकोटौ मीमांसाकमते महद्गौरवमिति विभावनीयम्।

**न्यायसिद्धान्तः-**

अर्थोपस्थापकशक्तिमद्वर्णसमूहः **"पदम्"**। तद्यथोक्तम्- **"ते विभक्त्यन्ताः पदम्"**[1] अर्थात्तादृशवर्णा एव विभक्तिमन्तः सन्तः पदव्यहारभाजो भवन्ति। तेषां पदानां कुत्र शक्तिरिति प्रश्नः? तत्र पदार्थतया त्रीणि तत्त्वानि प्रतीयमानानि भवन्ति। **"व्यक्तिः आकृतिः जातिश्च"।** तत्र व्यक्तौ, आकृतौ, जातौ वा पदानां शक्तिरिति जिज्ञासा जायते। अत्र न्यायसूत्रकारेण महर्षिगौतमेन एषां त्रयाणामपि पक्षाणां समालोचनं विधाय सिद्धान्तपक्षः यथा समुपस्थापितस्तथा समवधारणीयः।

**व्यक्तिशक्तिवादसमीक्षा-**

**"गौर्गच्छति, गामानय"** - इत्यादिपदप्रयोगानन्तरं वृत्त्या यस्य पदार्थस्योपस्थितिर्जायते सः "जात्याकृतिविशिष्टः" कश्चिद् व्यक्तिरूपः पिण्डः समुपस्थितो भवति। तत्सन्निधाने एव तादृशार्थप्रयोगदर्शनात्। तत्र संशयो जायते यद्वस्तुतः कस्मिन्नर्थे तादृशब्दप्रयोगः। तत्र

1. न्यायसूत्रम्-2/2/57

प्रारम्भतः तादृशविशिष्टावयवयंस्थानरूपा व्यक्तिरेव गोपदार्थतया भासते इति व्यक्तिशक्तिवादिनामाशयः तथा हि शब्दप्रयोगसामर्थ्याधीनमेव पदार्थावधारणञ्जायते। तथा हि गोशब्दस्य यथा लोके प्रयोगस्तेनैव गोपदार्थस्य स्वरूपनिश्चयो जायते। तद्यथा सूत्रकारः **''याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्यपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः''**[1]

तात्पर्यमिदं यत्- **''या शब्द''**- प्रभृतिसूत्रोक्तशब्दानां तादृशव्यक्तौ प्रयोगादिदमव-धारणीयं यद्व्यक्तिरेव पदार्थः। तथा हि-

**1. या शब्दः**

**''या'' ''गौर्गच्छति'' ''या'' ''तिष्ठति'' ''या'' ''निषण्णा''**- इत्यादिवाक्येषु तादृशविशिन्नक्रियाविशिष्टविभिन्नव्यक्तिषु ''या'' शब्दस्य प्रयोगो दृश्यते। अत्र यदि ''गोत्व''-जातिरेव गोशब्दवाच्याऽङ्गीक्रियते, तदा तस्या एकत्वात्सर्वपिण्डेषु अभेदेन भासमानत्वेन विभिन्नपदप्रयोगानुपपत्तिरतो द्रव्यपिण्डात्मकव्यक्तिरेव गोपदवाच्या, व्यक्तीनां भेदेन प्रतीयमानत्वात्।

**2. समूहः**

**''गवां समूहः''**- इति प्रयोगानुरोधाद् गोपिण्डानामेव भेदेन प्रतीयमानाना समूहस्योपलब्धिर्न तु जातेः, तस्या नित्यैक्यात्!

**3. त्यागः**

**''ब्राह्मणाय गां ददति''** इत्यादौ द्रव्यात्मकपिण्डस्यैव दानात्मकत्यागो विधीयते, न तु जातेस्तस्या अमूर्त्तत्वेन तादृशव्यवहारासम्भवात्!

**4. परिग्रहः**

**''स्वत्वेनाभिसम्बन्धः परिग्रहः''। चैत्रस्य गौः'' ''मैत्रस्य गौः''**- इत्यादौ द्रव्यात्मकव्यक्तिभेदात्सम्बन्धभेदः समुपपद्यते। अभिन्नजातौ न तादृशव्यहारोपपत्तिः!

**5. संख्या**

''पञ्च गावः'', ''दश गावः'', ''विंशतिर्गावः'' इत्यादिभिन्नभिन्नद्रव्याण्येव तादृशसंख्याभिः संख्याविषयीक्रियन्ते, न तु जातिः, तस्या एकत्वात्!

**6. वृद्धिः**

**'' हेतुमद्द्रव्यस्यावयवोपचयो वृद्धिः''**। सा च पिण्डात्मकद्रव्य एव ''अवर्द्धत गौः''- इत्यादिप्रयोगे विज्ञायते, न तु जातौ, अमूर्त्तत्वेन निरवयवत्वात्!

**7. अपचयः**

**''यत्किञ्चिदवयवविश्लेषोऽपचयः''**। स च तादृशावयविपिण्डे एव सम्भाव्यते, न तु निरवयवजातौ!

**8. वर्णः**

**''शुक्ला गौः'' ''कृष्णा गौः''** इत्यादौ द्रव्यस्यैव गुणयोगो भवितुमर्हति,

1. न्यायसूत्रम्-2/2/57

तस्यैव गुणाश्रयत्वेन गृह्यमाणत्वात्, न तु जातेः!

**9. समासः**

**"गवे हितमिति गोहितम्" "गवे सुखमिति गोसुखम्"**- इत्यादौ तादृशव्यक्तेरेव सुखादियोगो विभाव्यते, न जातेः!

**10. अनुबन्धः**

"अनुबन्धो नाम सरूपप्रजननसन्तानः" गौरेव गां जनयति, तादृशोत्पत्तिहेतुता तद्धर्मता च द्रव्यात्मकपिण्ड एव भवितुमर्हति, न तु जातेः। इत्त्थमुपर्युक्तव्यवहारे द्रव्यात्मकव्यक्तिरेव गोपदवाच्यतया ग्राह्येति व्यक्तिशक्तिवादिनां युक्तिप्रतिपादितमतमिति सङ्ग्राह्यम्।

**एतन्मतनिरासः-**

अत्रेदमवधारणीयं यत्केवला "द्रव्यात्मिका गौरेव" न "गो"- पदेनोपस्थाप्यतेऽपितु "गोत्वविशिष्टतादृशपिण्डात्मकद्रव्यरूपैव"। पूर्वोक्तपदाभिलापैर्यद्यपि द्रव्याणामेव योगो जायते, किन्तु न केवलानां "गोत्व"- धर्मरहितानामपि तु तद्विशिष्टानामेवातो न केवलमविशिष्टं द्रव्यमात्रं तादृशगवादिपदैर्वाच्यं वक्तुं शक्यम्। तथा च केवला व्यक्तिरेव वाच्या, तत्रैव पदानां शक्तिरिति केवलव्यक्तिशक्तिवादो न युज्यते।

**आकृतिवादसमीक्षा-**

**"आकृतिस्तदपेक्षत्वात्सत्त्वव्यवस्थानसिद्धेः"**[1] आकृतिपदार्थवादिन आकृतिमेव पदार्थतया विज्ञापयन्ति। यतो हि आकृत्यैव व्यक्तेर्बोधो जायते। सा च तादृशावयवविशेषाणां नियतो व्यूहः। तेनैव **"अयं गौः" "अयमश्वः"** इति भेदेन प्रतीतिर्जायते। तथा च यस्य ग्रहणाद् व्यक्तेर्भानं सम्पद्यते, स एव पदार्थः, अतः आकृतावेव पदानां शक्तिरङ्गीकार्येति तेषामाशयः।

**तन्मतनिरासः-**

इदमपि मतं न सङ्गच्छते। यतो हि यत्र जातेः सम्बन्ध प्रतीयते, तत्रैव "अयं-गौ"- रित्यादिप्रतीतिः। यत्र मृत्तिकादिपदार्थनिर्मिते गोसदृशपिण्डे, गवयादिपिण्डे वा जातिसम्बन्धो नास्ति, तत्र सत्यामप्याकृतौ न गवादिपदप्रयोगः। अतः केवलमाकृतिरेवपदार्थः इत्यङ्गीकर्तुं न शक्यते।

**जातिवादसमीक्षा-**

जातिरेवपदार्थ इति जातिशक्तिवादिनां मतम्। तेषायमयमाशयो यज्जाति सम्बन्धाभावे व्यक्त्याकृतियुक्तेऽपि पिण्डे तदुपयुक्तव्यवहाराभावाद् वस्तुतो जातिरेव मुख्यो पदार्थः। तथा हि- "गामानय, गां प्रोक्षय"- इति व्यवहारो मृत्पिण्डनिर्मिते तादृशाव्यकत्याकृतियुक्ते

---

1. न्यायसूत्रम्-2/2/58
2. न्यायसूत्रम्-2/2/62

द्रव्ये न केनापि क्रियतेऽतो जातावेव वस्तुतः पदार्थानां शक्तिरिति। तथा चोक्तम्-

**"व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः"**[1]

**तन्मतनिरासः-**

जातिरपि स्वातन्त्र्येण समुपस्थिता न भवितुमर्हति। सापि आकृतिं व्यक्तिञ्चापेक्षते। व्यक्त्याकृतिग्रहणाभावे न कदापि शुद्धजातेर्ग्रहणमतो जातिरपि केवला पदार्थो न भवितुमर्हति। तथा च केवलजातावपि पदानां शक्तिर्नैव वक्तुं शक्या। यथोक्तम्-

**"नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः"**[2]।

**विशिष्टशक्तिवादस्थापना-**

पूर्वोक्तप्रकारेण केवलायां व्यक्तौ, आकृतौ, जातौ वा पदानां शक्तिर्न भवितुमर्हति। तर्हि कुत्र शक्तिरिति जिज्ञासायां सूत्रकारः न्यायसिद्धान्तमुपस्थापयति- **"व्यक्त्याकृतिजातयस्तु पदार्थः"**[3]।

अयंभावः - जात्याकृतिव्यक्तीनां पार्थक्येन गृहीतुमशक्यत्वाज्जात्याकृतिविशिष्टव्यक्तावेव पदशक्तिर्निर्धारणीया। विवक्षावशादेषां प्रधानाङ्गभावो भवति। तथा हि यत्र भेदविवक्षया -**"गौरयं"** इत्यादिपदप्रयोगस्तदा व्यक्तिः प्रधाना जात्याकृती अङ्गभूते! यत्र "गाव" इति गोत्वावच्छिन्नसकलव्यक्तीनामभेदेन विवक्षा, तत्र जातिः प्रधानाः, व्यक्त्याकृती अङ्गभूते!यत्र गोक्रयविक्रयादिव्यवहारकाले गोसंस्थानविशेषापेक्षो व्यवहारः तत्र आकृतिः प्रधाना जातिव्यक्ती अङ्गभूते। इत्थं जात्याकृतिविशिष्टे व्यक्तिरूपे पदार्थ एव पदानां शक्तिरिति न्यायसिद्धान्तः। तत्र **"व्यक्तिर्गणविशेषाश्रयो मूर्त्तिः"**[4] अर्थाद् यत्र तादृशगुणविशेषास्तिष्ठन्ति सा मूर्त्तिरेव "व्यक्तिः" सा चावयविरूपेण भासते, **"आकृतिर्जातिलिङ्गाख्या"**[5] अर्थाद् यया जाातिस्तल्लिङ्गानि च प्रख्यायन्ते सा आकृतिः, सा समावायरूपेण भासते। **"समानप्रसवात्मिका जातिः,"**[6] येन धर्मेण विभिन्नेषु पिण्डेषु समानप्रकारकप्रतीतिर्जायते सा **"जाति"** सा नित्यसमान्यधर्मरूपेण भासते। यथा **"गोत्व-घटत्वमठत्वापटत्वादय"** इत्यवधारणीयम्। इत्थं च विशिष्टे पदानां शक्तिरिति न्यायराद्धान्तः समवधारणीयः। तत्तद्धर्मविशिष्टे पदार्थे एव तत्तच्छब्दानां शक्तिर्युक्त्या सर्वानुभवेन च सिद्ध्यति। अतः जात्यकृतिविशिष्टव्यक्तिशक्तिवाद एव न्यायदर्शनसिद्धान्तः।

1. न्यायसूत्रम्-2/2/63
2. न्यायसूत्रम्-2/2/64
3. न्यायसूत्रम्-2/2/65
4. न्यायसूत्रम्-2/2/66
5. न्यायसूत्रम्-2/2/67
6. न्यायसूत्रम्-2/2/68

UGC - CARE Listed
अक्टूबर-दिसम्बर, 2019

शोधप्रभा
वर्ष : 44, चतुर्थोऽङ्कः

# विलियमवर्ड्स्वर्थप्रतिपादितानां साहित्यिकसमीक्षासिद्धान्तानां विमर्शः

डॉ.सुमनकुमारझाः*

William Wordsworth (7 April 1770 – 23 April 1850) was a major English Romantic poet who, with Samuel Taylor Coleridge, helped to launch the Romantic Age in English literature with their joint publication Lyrical Ballads (1798) . Wordsworth's magnum opus is generally considered to be The Prelude, a semi-autobiographical poem of his early years that he revised and expanded a number of times. It was posthumously titled and published, before which it was generally known as "the poem to Coleridge". Wordsworth was Britain's poet laureate from 1843 until his death from pleurisy on 23 April 1850. The second of five children born to John Wordsworth and Ann Cookson, William Wordsworth was born on 7 April 1770 in Wordsworth House in Cockermouth, Cumberland, part of the scenic region in northwestern England known as the Lake District. His sister, the poet and diarist Dorothy Wordsworth, to whom he was close all his life, was born the following year, and the two were baptised together. They had three other siblings: Richard, the eldest, who became a lawyer; John, born after Dorothy, who went to sea and died in 1805 when the ship of which he was captain, the Earl of Abergavenny, was wrecked off the south coast of England; and Christopher, the youngest, who entered the Church and rose to be Master of Trinity College, His notable works are **lyrical ballads**, poems, in two volumes, The Excursion, The prelude, i wandered as a cloud , literary movement- Romanticism

पाश्चात्यकाव्यशास्त्रस्य विकासयात्रायां विलियमवर्ड्स्वर्थमहोदयस्यावदानं नूनमेव महत्त्वपूर्णं प्रतिभाति। तेन अष्टादश-शताब्द्यां प्रचलितां काव्यरचनाशैलीं निराकृत्य, नवशास्त्रवादेन सह साहित्यसमीक्षासिद्धान्तस्य यः सम्बन्धः पूर्ववर्तिभिर्विचारकैः स्थापित

---

*सहाचार्यः, साहित्यविभागः, श्री. ला. ब. शा. रा. सं. विद्यापीठम्, नवदेहली-16

आसीत्, तत्सम्बन्धं सिद्धान्तञ्चापि निराकृत्य साहित्यसर्जनस्य साहित्यसमीक्षायाश्चैका नूतना सरणि: प्रवर्तिता, या स्वच्छन्दतावाद: (Romanticism) इति नाम्ना अभिधीयते। अनेन वादेन सह साहित्यालोचनस्य साहित्यसर्जनस्य चैको नवीनो मार्ग: प्रवर्तित: पाश्चात्यसाहित्यजगति।

वस्तुतो वर्ड्स्वर्थप्रतिपादित: काव्यशास्त्रीयसिद्धान्त: स्वच्छन्दतावादस्य घोषणापत्रं (Manifesto of Romantic movement) मन्यते। यतोऽनेन सिद्धान्तेन पश्चिमजगति काव्यसर्जनस्य साहित्यसमीक्षायाश्च नवीना सरणि: आविर्भूता। तन्निरूपित: साहित्यिकसमीक्षासम्बन्धिविचार: तस्यैव काव्यसंग्रह: 'लिरिकल-बैलेड्स' (Lyrical Ballads) इत्यस्य ग्रन्थस्य द्वितीयसंस्करणस्य भूमिकायां प्रकाशित:। यत्रासौ कवि-कविता-काव्यभाषा-काव्यरचनाप्रक्रियासु स्वकीयं चिन्तनं न्यरूपयत। तद्विरचिता भूमिकेयं ऑंग्लसाहित्येतिहासस्य सर्वाधिको महत्त्वपूर्णोऽभिलेखो मन्यते। यद्यपि अभिलेखेऽस्मिन् अभिव्यक्ता: तस्य विचारा नान्तिमा:, यत: तत्पश्चाल्लिखितेषु शोधनिबन्धेषु तेन स्वकीया: पूर्वप्रतिपादिता: विचारा: परिवर्तिता: परिवर्धिताश्च, तथापि अस्यां भूमिकायां प्रकटितानां विचाराणां महत्त्वमैतिहासिकमविस्मरणीयञ्च वर्तते। तथ्यस्यास्य पुष्टिरनेन कथनेनापि भवति-

It has been regarded in certain quarters as declaration of literary rights, a powerful document in the liberating of Letters from bondage it raised a wall between the eighteenth and nineteenth centuries; it dated a new era.[1]

वर्ड्स्वर्थमहोदयात्पूर्वं दान्तेमहोदयो भावनानां सहजोच्छलनमेव काव्यमिति मतं निराकृत्य, श्रमसाध्येनाभ्यासेन चोद्भवं भवति काव्यमिति मेने। यद्यपि तेन कवितासु देशभाषाप्रयोगस्य परामर्श: प्रदत्त:, परं देशभाषया (Vernacular) अस्याभिप्रायो जनसाधारणेन प्रतिदिनं प्रयुक्तया भाषया साकं नासीत्। तेन स्पष्टरूपेणोल्लिखितम् । Avoid rustic language अर्थात् ग्राम्यभाषा सर्वथा त्याज्या इति। तन्मते भाषा केवलं विचाराभिव्यक्ते: साधनं भवति, महत्त्वपूर्णो भवति विचार: न तु भाषा।[2] यथा - The best soldiers should have the best horses, and in like manner the best speech is that which is suited to the best thoughts.

अष्टादशशताब्द्या अन्त्यं यावत् काव्येषु कृत्रिमा आडम्बरपूर्णा रूढियुक्ता च भाषाशैली स्वाधिपत्यं स्थापितवती। अर्थात् अस्या: भाषाशैल्या आधिपत्यमभवत्। इयं भाषाशैली वर्ड्स्वर्थमहोदयेन अस्वीकृता। अथ च स्वच्छन्दताया: नवीनापद्धति: आविर्भूता। वर्ड्स्वर्थमहोदयेन काव्यपरिभाषा-काव्यप्रयोजन-रचनाप्रक्रिया- कवि-विषयवस्तु-कल्पना-भाषाशैली-छन्द: प्रभृतिषु विषयेषु स्वविचार: प्रकाशित:।

---

1. Smith and parks – The Great critics- p-795-6
2. यथा च राजशेषर:- 'उत्तिविसेसं कव्वं भासा जा होदु सा होदु' इति

**काव्यपरिभाषा– 'लिरिकल बैलेड्स'** इत्यस्य भूमिकायां वर्ड्स्वर्थमहोदयेन कविता इत्थं परिभाषिता– 'प्रकर्षाणां भावानां सहजोच्छलनमेव कविता कथ्यते, अस्या उद्भवः प्रशान्तक्षणेषु भावानां पुनःस्मरणेन जायते। यथा– all good poetry is the spontaneous overflow of powerful feelings. It takes its origin from emotion recollected in tranquility.

शब्दैः सौन्दर्यस्याभिव्यक्तिर्नाम काव्यम्। सौन्दर्येण चित्तप्रसादनं भवितुं शक्यते, चित्तवृत्तीनां समत्वमपि काव्यसौन्दर्येण भवति।– Poetry is the art of expression in melodious words, thoughts which are the creations of imagination and feelings.

तन्मते कवित्वकारणादेव कविताः काव्यत्वं प्राप्यन्ते न तु विषयवैविध्यवशात्। वस्तुतः कवितायां तासां घटनानां परिस्थितीनां वर्णनं भवेत् याः सामान्यजनजीवने लोके च घटन्ते। अनेन साकमेव कवितायाः भाषाऽपि तादृशी भवेत् यथा सामान्यजनेषु प्रयुज्यते, अर्थात् यस्याः प्रयोगः सामान्यजनेषु भवति, तस्या भाषायाः प्रयोगः कवितायां भवेत्। शब्दा अपि तस्याः भाषायाः भाण्डारात् चेतव्याः। तत्र लोकभाषायां काव्यभाषायाञ्चेदं पार्थक्यं दृश्यते यत् काव्यभाषा कल्पनान्विता भवति, कल्पनाप्रधानत्वात्तत्र सामान्यवस्तून्यपि नवत्त्वं वैलक्षण्यञ्च धारयन्ति। जनसामान्यस्य भाषाचयनेन विषयवस्तूनां घटनानाञ्च सम्प्रेषणं प्रकर्षरूपेण सम्यग्रूपेण च कर्तुं शक्यते।

सः कृत्रिमभाषाव्यवहारस्य आडम्बरपूर्णभाषाप्रयोगस्य च विरोधीन आसीत्। तन्मते सर्वाः उत्तमाः कविताः प्रकर्षभावानां सहजः स्वतश्च स्फूर्तोद्गारो भवन्ति, परमेवंविधाः कविताः कवीनां बहुकालं यावत् कृतेन गभीरेण विचारेण जायन्ते। यतो विचाराः अस्माकमतीतस्यानुभूतिष्वाधृताः भवन्ति। कवितायै तद्विषयोऽपि महत्त्वपूर्णो भवति। तस्य द्रढीयान् विश्वास आसीत् यत्मानवमनसोऽन्तः केषाञ्चित् सहजगुणानामनश्वरगुणानां निवासो भवति, एवमेव बाह्यजगतः स्थायितत्त्वेषु महत्सु तत्त्वेषु चैका शक्तिरधिवसति, या मानवमनांसि प्रभावयति। अर्थात् कविता मानवमनसो बलवतीनां भावनानां सहजोच्छलनं भवति, अस्या उद्भवः प्रशान्तावस्थायां भावचिन्तनेन जायते। सहजभावात्तस्याभिप्रायो विचारहीनमानवस्य सहजभावेन न विद्यते। यथा च– Poems to which any value can be attached were never produced on any variety of subjects but by a man who, being possessed of more than usual organic sensibility had also thought long and deeply.

तस्य स्पष्टं मतमासीत् यत्काव्यरचनायाः क्षणे तु सहजभावावेग आवश्यकः, परं कविमानसः तस्मात् प्रेरणाक्षणात् पूर्वमेव गहनचिन्तनेन मननेनाध्ययनेन च निर्मीयते, तत्र सद्वृत्तयो भवन्ति। अतः सत्काव्यरचनायै चिन्तन–मननयोर्महत्त्वमपि तेन मन्यते। तन्मते काव्यरचनाप्रक्रिया इत्थं प्रवर्तते– **पूर्वं कविमानसे कस्यचिदपि वस्तुन इन्द्रियबोधो जायते। तदनन्तरं वस्तूनामप्रत्यक्षत्वे, प्रशान्तक्षणेषु कविः तं भावं विचारयति, यो भावो वस्तुनो**

**दर्शनकाले तस्य मनसि जागृत आसीत्। विचारिते सति शनैः शनैः तद्भावो मूलभावसदृशं भावमभिव्यनक्ति। अयमेव भावः कविना अभिव्यज्यते, कविता चोत्पद्यत इति ।**

काव्यरचनायां प्रकृत्याः सौन्दर्यपूर्णपरिवेशस्य महत्त्वेनापि वर्ड्स्वर्थमहोदयः परिचित आसीत्। तन्मते प्रकृत्याः रम्यपरिवेशः कविहृदयं विशदयति, कविमानसस्य द्रुतीकरणे साहाय्यो भवति, कविकर्मणि च तीव्रताम् आनयति। तीव्रानुभूतिक्षणे प्राकृतिकपदार्थेषु तेन आध्यात्मिकं तत्त्वमवलोक्यते। अर्थात् तत्र आध्यात्मिकतत्त्वस्य दर्शनं करोति कविः। अनेन दर्शनेनैव कविः उत्तमकाव्यसर्जने समर्थो भवति। इदमेव क्षणं तस्य जीवनस्य चरमं क्षणं भवति। एतादृशेऽस्मिन् क्षणे यदा कविना स्वकीयानां तीव्रभावानामुच्छलनं काव्यत्वेन क्रियते, तदा सहृदयपाठकाः श्रोतारश्चापि तामनुभूतिमनुभवन्ति। ते तस्यामेव स्थितौ प्रविशन्ति समागच्छन्ति वा , या स्थितिः कविना अनुभूता आसीत्। अनेनैव कवित्वसिद्धिः सञ्जायते। वर्ड्स्वर्थमहोदयस्य मतं वर्तते यत्- **'यावत् कविः स्वयं कमपि भावं नानुभवति, तावत् तत्भावमन्यं प्रति कथं सम्प्रेषयेत्। 1810 ई.** मध्ये प्रकाशिते 'Upon epitaphs' नामके निबन्धे तेन अयमेव विचारः प्रकटीकृतः। यथा- 'यावत् स्मारकलेखकः स्वयं शोकं नानुभवेत् शोकाऽभिभूतो न भविता, तावदसौ वास्तविकीं करुणकवितां न रचयितुं शक्ष्यति।

सारतो भावनायाः सत्यनिष्ठता तीव्रता च तन्मते महत्त्वपूर्णे स्तः, सायासं सौन्दर्यस्यान्वेषणम् अन्विष्य च एकत्रीकरणमसमीचनमेव। सहजभावा एव चिन्तनादनन्तरं काव्यरूपं धारयन्तीति तेषामभिमतम्। चिन्तनं पुनःपरीक्षणं विवेकश्चेति महत्त्वपूर्णा अनिवार्याश्च काव्यगुणाः मन्यन्ते तेन । यथा च तेनोच्यते स्वकाव्यसर्जनविषये- My first expression I often find detestable; and it is frequently true of second words as of second thoughts that they are best.

साररूपेण वक्तुं शक्यते यत्- प्रारम्भे तेन कामं, कवितायां भावानां सहजोच्छलने साधारणकाव्यशैल्यामुपरि च बलं प्रदत्तम्, परमनन्तरं कवितासर्जनाय चिन्तनं मननं परीक्षणञ्चापि अनिवार्यहेतुरूपेण स्वीकृतम्, अपि च कलासौन्दर्यं कविताया अनिवार्यगुणः स्वीकृतः।

**कल्पनासम्बन्धिविचारः-**

कविकल्पनासम्बन्धे वर्ड्स्वर्थमहोदयस्य मतमित्थं वर्तते। तेन क्वचित् कल्पनान्तर्गतं बिम्बानां पुनःसर्जनं, संयोजनञ्च स्वीक्रियते, क्वचित् तु नव्यशास्त्रवादीनामिव कल्पनां बौद्धिकान्तर्दृष्टिः (Intellectual vision) अङ्गीक्रियते। क्वचिदन्मा मानवमस्तिष्केन यथार्थजगति कस्यचित् बिम्बस्य विचारस्य वा आरोहणं कल्पना कथ्यते, तु क्वचित्। कल्पनां दीप्तिर्मन्यते, या चेतनमस्तिष्कस्य आत्मनियन्त्रणाद् बहिर्वस्तु विद्यते। वस्तुतः कल्पनायां बाह्यान्तरयोर्मेलनं भवति। तन्मते कविः सामान्यजीवनस्य घटनासु स्थितिषु च कल्पनायाः संनिवेशः कुर्यात्, वस्तूनां वर्णनमित्थं भवेत्, यथा तद्वस्तु तेनावलोक्यते, तत्र सम्बन्धोऽनुभूयते। (not as they are but as they appear.) तस्य विचारो वर्तते यद्विशिष्टा

प्रतिभा कल्पनायाः साहाय्येन प्रकृत्याः प्रतिकृतेरङ्कनं कर्तुं शक्नोति, (can create a like existence) यतः सा अदृश्येन जगता स्वसंबन्धं स्थापयति। सारतः कल्पनान्तर्गतं पारदर्शिनी अन्तर्दृष्टिः, मस्तिष्कस्य विशदता, सर्वोच्च-बौद्धिकता तर्कशीलता चान्तर्भवन्ति।

**काव्यप्रयोजनम्-**

वर्ड्स्वर्थमहोदयस्यानुसारं काव्यस्येदमेव प्रयोजनं वर्तते यत्काव्यं पाठकहृदयेषु सत्प्रभावं स्थापयेत्, तेषां ज्ञानवर्धनं मानसिकसुखवर्धनमानन्दवर्धनञ्च कुर्यात्। The understanding of the reader must necessarily be in some degree enlight-ened, and his affection strengthened and purified. तन्मते सुकवेः कर्त्तव्यमस्ति पाठकभावनानां परिष्करणम्। पाठकस्य भावेषु संतुलनं समत्वं विवेकपूर्णत्वञ्चोत्पादनमपि कविकर्म एव, येन भावा शुद्धाः स्थायिनः प्रकृत्यानुरूपाश्च भवेयुः। कवितायाः भावात्मकः प्रभाव एवं भवेत् यत् तां पठित्वा पाठकमनसि मानवान् पशून् जडपदार्थान् प्रत्यपि च सहानुभूतिः संवेदना च जागृयात्, तस्य भावात्मकं-जडत्वं-उदासीनत्वञ्चापगच्छेत्, येनासौ जगतो रहस्यं मूलप्रकृतिं चावबोधयेत्। यथा चोक्तं तेन- Readers must be humbled and humanized, in order that they may be purified and exalted.[1]

असत्यभावनानां विरेचनं, सामाजिकाडम्बरेणोत्पद्यमानानां पूर्वाग्रहाणां समाप्तिः, घृणा-द्वेषसदृशानां दुर्भावनानां निवारणञ्चेति कवितायाः कार्यं भवेदिति वर्ड्स्वर्थमहोदयस्य विचारः। कविः मानवसंवेद्यतां (Sensibility) विस्तारयति, येन मानवेषु वैशिष्ट्यमुदेति। वस्तुतः टॉलस्टायमहोदयेन कलायाः उपयोगितासंबन्धे ये विचाराः 'On Art' इत्यस्मिन् ग्रन्थेऽभिव्यक्ताः, त एव वर्ड्स्वर्थमहोदयेनापि प्रकटीकृताः। रैने-वैलकमहोदयेन तस्य काव्यसिद्धान्तं समीक्षयता लिख्यते- The cultivation of good feelings, of the Joy of that pure principle of love becomes the one central aim of poetry .

अत एव तेनोद्वेगपूर्णोपन्यासानां रुग्णानामधमानाञ्च जर्मनत्रासदीनां व्यङ्ग्यलेखानां प्रचारपरकसाहित्यानाञ्च विरोधः कृतः। यद्यपि गते काले तेन काव्यमुपदेशप्रधानं शिक्षाप्रदञ्चरच भवेदित्यस्मिन् पक्षे दृढतररूपेण समागतः। तेनोक्तम्- Every great poet is a teacher, I wish either to be considered as a teacher or as nothing.[2] तथापि तेन काव्यं केवलं नैतिकसत्यस्य प्रचारमात्रं न मन्यते स्म। तन्मते काव्येभ्य आनन्दप्रदानमपि ( to give immediate pleasure) आवश्यकं तत्त्वं भवेत् - We have no sympathy but what is propagated by pleasure .

एतदर्थं काव्येषु छन्दसो माहात्म्यं स्वीक्रियते तेन, यतः तेषां दृढतरो विश्वासः आसीत् यच्छन्दसा काव्येषु रमणीयता गेयता भावसम्प्रेषणता च समागच्छति, येन सहृदयसामाजिकाय आनन्दाभिवृद्धिर्जायते। तेन स्पष्टरूपेणोक्तं यत्काव्यं सत्यस्य संवाहकमात्रं

1. wordsworth, prelude, p-17, 28, 196
2. wordsworth-prelude.- p- 32, 33

न भवेदपितु मानवजीवनेषु मानवव्यवहारेषु सकारात्मकं परिवर्तनं भवेत्। तेन बौद्धिकता काव्यञ्च परस्परं विरोधिनौ मन्येते। कालान्तरे तेनायं विश्वासः प्रकटीकृतो यद्विज्ञानविषयोऽपि काव्येषु निबद्धं शक्यते, काव्यसौन्दर्यबोधे च सहायकं भवितुं शक्यते। परं कवि-वैज्ञानिकयोः ज्ञानमानन्दरूपं स्वीकुर्वताऽपि तत्र पार्थक्यं प्रदर्शितम्- कविज्ञानमस्माकमस्तित्त्वस्य अनिवार्याङ्गं भवति, तदस्माकं प्रकृतोत्तराधिकारो वर्तते, यदपहर्तुं नैव शक्यते । वैज्ञानिकस्य ज्ञानं वैयक्तिकोपलब्धिर्भवति, यस्यार्जनं शनैः शनैः क्रियते। वैज्ञानिकोऽज्ञातोपकर्ता इव सत्यमन्वेषयति, कविस्तु सत्यं साकारमित्रमवबुध्य प्रसन्नतायाः गीतानि गायन्ति, तेषु गीतेषु मानवमात्रस्य मङ्गलकामना उत्कर्षश्च प्रमुखरूपेण वर्ण्येते। कवेः दायित्त्वं भवति यदसौ सम्पूर्णमानवजातिं प्रेम्णा ज्ञानेन च एकस्मिन् सूत्रे निबद्धयेत्, तां पतनात् निवारयेत्, अत एव तेन कविः मानवप्रकृतेः सुरक्षाकवचं कथितम्।

**भाषाशैलीसम्बन्धिविचारः-**

काव्यभाषासंदर्भे वर्ड्स्वर्थमहोदयस्य विचार इत्थं वर्तते- 'काव्यभाषा जनसाधारणस्य भाषा भवेत्। पद्य-गद्ययोर्भाषायां न भवति तात्त्विकं पार्थक्यं, न वा भवितुं शक्नोति। यथा- That language of prose may yet be well adopted to poetry... and that a large portion of the language of very good poem can in no respect differ from that of good prose. It may be safly affirmed that there neither is, nor can be, any essential difference between the language of prose and metrical composition.[2]

एतदर्थं ये तर्काः तेन प्रस्तुताः, ते ह्येवं सन्ति- गद्यभाषा कविताभाषा चेत्युभयोरभिव्यञ्जनाकर्तृ इन्द्रियं तयोश्च ग्रहीतृ इन्द्रियमेकमेवास्ति, अनयोः परिच्छदः एकेनैव तत्त्वेन निर्मीयते, अनयोश्च रागो रुचिरपि परस्परं समाने भवतः। परं प्रश्नोऽयं वर्तते यत् जनसाधारणस्य भाषायाः तेषां किं तात्पर्यमासीत् ? तन्मते काव्यभाषायाः चयनं वास्तविक-भाषासु भवेत्। अर्थात् Selection of the real language of man. तत्र भाषायाः चयनमित्यनेन तेषामभिप्रायो वर्तते यत्- ग्राम्यभाषा यथार्थतः सर्वथा च काव्ये न व्यवह्रियेत्, अपितु तत्र चयनं भवेत्। तन्मतेऽभिव्यक्तिः सरला स्पष्टा आडम्बरहीना च भवेत्, अपि च सा पाठकेषु अरुचिः वितृष्णा च नोत्पद्येताम्। ( purged from causes of dislike or disgust) एतदर्थं सः भाषायां चयनमिच्छति, यतोऽनेन विधिना ग्राम्यत्व-तुच्छता-सामान्यता-प्रभृतीनां दोषाणां निवारणं स्वत एव भवति। तन्मते भाषा एवंविधा भवेत् यस्या अवबोधः सर्वेभ्यः सहजं भवेत्, या हृदयस्य तीव्रभावावेगाभिव्यक्तौ समर्था स्यात्, यत्र आडम्बरो मास्तु अपितु या प्राकृतिकी सार्वभौमिकी च स्यात् । वस्तुतः तस्य भाषाशैलीविषयकं मतं काव्यरचनाविषयकविचारैः साकं घनिष्ठरूपेण संबद्धमस्ति। तेन कवितां भावावेगस्योच्छलनं मन्यते, भावोच्छलनकाले भाषा हृदयान्निःसरति, अत एव चिन्तनमननयोरनन्तरं सुचिन्तिता संगठिता च न भवति कविता । चिन्तनप्रक्रियया कवीनां मनो-मस्तिष्कञ्च तथा परिष्कृतं जायेते येन तेषां सहजभावावेगः प्रकृष्यः प्राणवान्

ऊर्जस्वी च सञ्जायते। अथ च समुचितेन विवेकपूर्णचयनेन च ( True and Judicious selection) भाषा विलक्षणा प्राणयुक्ता नैसर्गिकी सरसा च प्रतिभाति। यद्यपि वर्ड्स्वर्थमहोदयो भावोच्छलनमङ्गीकरोति, परं तस्मै विचारशीलजनस्य धीरगम्भीरजनस्य भावोद्रेकचित्तस्यैव भावोच्छलनमभीष्टं, वर्तते न तु कस्यचित् विवेकहीनस्य विचारशून्यजनस्य वा । यथा चोक्तं तेन- Poem to which any value can be attached were never produced on any variety of subjects but by a man who, being possessed of more than usual organic sensibility, had also thought long and deeply.[1]
सन्दर्भेऽस्मिन् वर्ड्स्वर्थमहोदयस्य विचारः कॉलरिजमहोदयस्य विचारेण सह साम्यं भजते, यतः कविर्भवति विवेकशीलप्राणी, काव्यरचनायां च चिन्तनस्य प्राधान्यं भवतीति कॉलरिजमहोदयस्यापि विचारः। भावतीव्रतायाः क्षणेषु काव्यभाषायां यदलङ्कारतत्त्वं प्रविशति, तत्र भवति कृत्रिमं स्वाभाविकत्वात्। अतः तस्याभिनन्दनं भवेदिति वर्ड्स्वर्थमहोदयस्य विचारः। तीव्रभावावेगेन सह रूपकसम्बन्धं योजयता काव्यभाषायां रूपकप्रयोगमपि अङ्गीकरोति । अथ च समर्थनाय प्राचीनान् कवीनुद्धरति। यथा- The earliest poets wrote naturally, feeling powerfully, in a figurative language……….. their language was felt to differ materially from ordinary language, because it was the language of extra-ordinary occasions.[2] तन्मते भावावेगक्षणेषु या भाषा जनैः प्रयुज्यते सैव भाषा समुचिता। कविर्यदा एतादृशीं भाषां सन्निकटं गच्छति, तदा तस्य भाषाशैली तावन्त्यैव समुचिता मन्यते काव्यरचनायै । परं केचन एव कवयः कार्येऽस्मिन् साफल्यं प्राप्नुवन्ति। यथा- The language of the poets falls short of that which is uttered by men in real life, under the actual pressure of those passions.[3]

साररूपेण तेन तादृशी कविता महती सर्वोत्तमा च मन्यते या तीव्रभावावेगक्षणेषु विरच्यते, अपि च यत्र भावावेगवशादेव उदात्ता रूपकशैली प्रयुज्यते। तस्य मतमिदं तदानीन्तनकालस्य लोककवितातः (Folk-poetry) प्रभावितं वर्तते। एतदर्थमेव वर्ड्स्वर्थमहोदयेन बर्नस-बर्गरयोः काव्यं प्रशंसितम्। तेन स्वयमपि ग्राम्यगीतमाश्रित्य आख्यानछन्दसि च ( Ballad stanza) काव्यरचना कृता। अतस्तेन भाषायाः सरलता सरसता साधारणता चाङ्गीक्रियते। तस्य मनसि प्राचीनं रोमं प्रति आदरभाव आसीत्, अतस्तेन लैटिनस्य विद्वत्तापूर्ण-परम्परायाः परित्यागो न कृतः, अपि च वर्जिल-हौरेस-मिल्टन-स्पैन्सरप्रभृतीनां महाकवीनां मतमङ्गीकृतम्।

इत्थं तस्य काव्यसिद्धान्तानां परिशीलनेन च ज्ञायते यदसौ प्रकृतिवादी विद्यते, यः कवितासु ग्राम्यगीतानां ग्राम्यभाषायाश्चानुकरणं समर्थयति, कलावादस्य कृत्रिमतायाश्च

1. wordsworth- prelude- p-34
2. wordsworth- prelude- p- 35
3. तत्रैव- पृ. 35

काव्येषु प्रयोगं निराकरोति। परं तस्य काव्यसिद्धान्तानां गभीरमननेन परिशीलनेन च परिलक्ष्यते यदसौ स्पैन्सर-मिल्टन-चौसर-शैक्सपियरमहोदयानां कलाचिन्तनं स्वप्रकृतिवादेऽन्तर्भावयति। तस्य सामान्यभावचिन्तने महतां कवीनां मिल्टन-शैक्सपियरप्रभृत्तीनामुदात्तभावाअपि समाहिता वर्त्तते। यथा चोक्तं रैने-बैलकमहोदयेन-The language spoken by men came to mean something very different from naturalism. It finally meant the language of Milton and Shakespeare, the impassioned language of the great poet.[1]

**छन्दोविचारः-** वर्ड्स्वर्थमहोदयेन कविता छन्दोमयी मन्यते। तन्मते छन्दोवशादेव कविभिः सविशेषा भाषा प्रयुज्यते। यथा तेन भाषाचयनमिष्यते तथैव छन्दसां चयनमपि। तस्य स्पष्टं मतं विद्यते यच्छन्दः स्वच्छन्दं न भवेत्, अर्थात् छन्दसो नियमो नियतो निश्चितश्च भवेत्, तत्र विषयानुकूलं समञ्जसं स्यात्। छन्दः समुचितं नियमितमेकविधञ्च भवेत्। यद्यपि छन्दः कवितायै अनिवार्यं न मन्यते तेन, परं कवितासु तस्य महत्ता शक्तिः प्रभावश्चाङ्गीक्रियते। तन्मते करुणायाः भावोद्रेकस्य च यावान् सफलं चित्रणं छन्दोमय्यां रचनायां भवितुं शक्नोति, न तावान् गद्येषु, यतः छन्दसा विषयेषु समत्वमागच्छति, आनन्दानुभूतिरपि जायते। अतः छन्दः कवितायाः गुणः स्वीक्रियते तेन, यस्योपेक्षा नैव कर्तुं शक्यते।

**वर्ड्स्वर्थमहोदयमतसमीक्षणम्-**

वर्ड्स्वर्थमहोदयस्य भाषा-छन्दोविषयकविचाराः नैव स्वीकृताः समीक्षकैः। कॉलरिजमहोदयेन तस्य विचाराः निराकृताः। तेन वर्ड्स्वर्थमहोदयस्य विचारान् खण्डयता निम्नलिखिता आक्षेपा उपस्थापिताः-

1. My objection is first that in any sense this rule is applicable only to certain classes of poetry. अर्थात् तस्य भाषासंबन्धिविचाराः काव्यस्य केषुचित् विशिष्टवर्गेषु एव प्रवर्तन्ते।

2. कामं नियमोऽयं कासुचित् कवितास्वेव परिपाल्यते, नियमोऽयं न हानिकारकः, तथापि निरर्थको विद्यते। अतोऽस्य परिपालनं नावश्यकम्। यथा- And hastly, that as far as, and in that degree in which it is practicable, it is yet as a rule useless, it not injurious and therefore either need not, or ought not to be practiced.[2]

कॉलरिजमते सैव भाषा श्रेष्ठा भवितुं शक्यते या मस्तिष्के जायमानानां क्रियाणां ग्रहणं बिम्बद्वारा क्रियते अर्थादसौ लोकजीवने प्रचलितायाः सामान्यभाषायाः काव्येषु प्रयोगपक्षे नासीत्। । Selection of the real language इति यदुक्तं वर्ड्स्वर्थमहोदयेन तत्रापि कॉलरिजेन स्वविरोधः प्रदर्शितः। तन्मते प्रत्येकस्य जनस्य भाषा, तस्य ज्ञानस्य विस्तारेण सीम्ना वा, प्रतिभावशात् अनुभूतेः सत्यतावशात् गाम्भीर्येण च पृथक्-पृथक्

---

1. History of western litehrary critic- p- 36
2. तत्रैव- Colridge.- litehrary Criticism- 87

भविता। स्वप्रकृतिवशात् जात्यादिकारणैरपि एकस्य जनस्य भाषा अन्येभ्यो जनेभ्यो भिन्ना भवति, भविष्यति च। अतः कथनमिदं यदेकस्य जनस्य भाषा वास्तविकी विद्यते, अपरस्य वास्तविकी नास्तीति न प्रमाणसङ्गतम्। अतो वास्तविक-भाषायाः प्रश्नोऽतिजटिलो गंभीरश्च, तस्याः किमपि निश्चितं स्वरूपं नैव भवितुं शक्यते, यस्य परिपालनं सर्वैः कविभिः करणीयम्। अतस्तेनोक्तं यत् वास्तविकशब्दस्य स्थानेऽस्माभिः साधारणः सामान्यो वा शब्दः प्रयोक्तव्यः। यथा- for real, Therefore, we must substitute ordinary or lingua communis.[1]

कॉलरिजमते कवितासु छन्दोऽनिवार्यं तत्त्वं वर्तते। छन्दसामुद्गमः स्वतःस्फुरितप्रयत्नेन मनसि जायते, तस्योपादेयता चेयं वर्तते यच्छन्दो भावनाप्रवाहं संयमयति, संयतति समन्वयति च। छन्दसा सामान्यभावनाः मनोवेगाश्चातिग्रहणशीलाः प्रबलाश्च जायन्ते। वर्ड्स्वर्थमहोदयस्य विपरीतं कॉलरिजेन गद्यपद्ययोर्भाषायां छन्दोवशात् स्पष्टं पार्थक्यं मन्यते। यथा - I write in metre, because I m about to use a language different from that of prose. There may be, is and ought to be an essential difference between the language of prose and metrical composition.[2]

**निष्कर्षः**- वस्तुतो वर्ड्स्वर्थमहोदयस्योद्देश्यं कृत्रिम-भाषाशैल्याः बहिष्करणमासीद्, परं तेन वृत्तमिदमनावश्यकमाग्रहपूर्वकमुद्घुष्टं यत् काव्यभाषा सामान्या ग्रामीणा च भवेत्। स्पष्टमस्ति यत्तस्य मतमिदं न त्वोचितं प्रतीयते न वा व्यावहारिकमेव। इदमेव कारणं यदसौ स्वयं सिद्धान्तस्यास्य परिपालनं स्वरचनासु कर्तुं न समर्थो बभूव, समीक्षकैः तन्मतं खण्डितमथवा निराकृतम्। तथापि साहित्यिकसमीक्षाक्षेत्रे तस्यावदानं तु वर्तत एव यत्तेन कृत्रिमभाषाशैल्याः विरुद्धं वागाडम्बरस्य विरुद्धञ्च डिण्डिमो घोष उत्थापितः, साहित्यसर्जनाय काव्यभाषायै चैका नवीना दृष्टिः प्रदत्ता, प्रतिपादिता च।

सारोऽयं वर्तते यत् वर्ड्स्वर्थमहोदयः प्राचीनविचारान् गृह्णन्नपि, तेषुं नवत्वमानीतवान्, तेभ्यो नवीनं रूपं प्रदत्तवान्। नवशास्त्रवादिनामिवासौ काव्यं प्रकृतेरनुकरणं तु मेने, परं तत्रैको नवीनोऽर्थो योजितः। अष्टादशशताब्द्या आचार्याणामिवासौ भावावेगेषु कवितायाः दर्शनं चकार, परं तत्रेदमपि योजितवान् यत्ते भावावेगाः शान्तिपूर्ण-चिन्तनस्य फलं भवन्तु। तेन कल्पनाशक्तेः विशिष्टं महत्त्वमङ्गीकृतम्। तन्मते कल्पनाशक्त्या कविः ब्रह्माण्डस्यैक्यमनुभवति, काव्यस्य बाह्यतत्त्वापेक्षया आभ्यन्तरतत्त्वस्य महत्त्वं प्रतिष्ठाप्य, शैल्याः परिशुद्धतायाः अलङ्कृत्याश्च स्थाने, अन्तःस्फूर्तौ, भावानां सहजोच्छलने च बलं प्रदाय रोमानी-समीक्षा प्रवर्तिता। इदमेव कारणं यत्काव्यशास्त्रक्षेत्रेऽल्पं विलिख्यापि तस्य स्थानमनुपमं गौरवपूर्णञ्च वर्तते। तन्निरूपिताः विचारा अद्यापि समाद्रियन्ते पाश्चात्त्यसाहित्यसमालोचनायाम्।

---

1. Colridge- litehrary criticism- p- 88
2. Colridge- litehrary criticism- p- 88

सहायकग्रन्थसूची-

1. Western litrary Criticism- From Plato to present by A Habib.
2. The use of poetry and the use of criticism—By T.S. Eliot, Faber and Faber—3 Queen square, London.
3. Coleridge and Abhinavgupta – Dr Shrikrishna mishra.
4. पाश्चात्त्यकाव्यशास्त्र के सिद्धान्त डॉ.शान्तिस्वरूपगुप्त,प्रकाशकः,अशोकप्रकाशन, दिल्ली-6 ।
5. पाश्चात्त्यकाव्यशास्त्र के सिद्धान्त-डॉ.मैथिलीप्रसादभारद्वाज हरियाणासाहित्यअकादमी, चण्डीगढ।
6. भारतीय एवं पाश्चात्त्यकाव्यशास्त्र- डॉ.बच्चन सिंह, हरियाणा साहित्य अकादमी, चण्डीगढ ।
7. पाश्चात्त्यकाव्यशास्त्र की परम्परा - डॉ. नगेन्द्र ।
8. पाश्चात्त्यकाव्यशास्त्र- डॉ. भगीरथ मिश्र ।
9. पाश्चात्त्यकाव्यशास्त्र -प्रो. देवेन्द्रनाथ शर्मा ।
0. पाश्चात्त्यकाव्यशास्त्र- डॉ. कृष्णदेव शर्मा, विनोदपुस्तकमन्दिर, आगरा ।
क्रोचे: एस्थैटिका-एसेन्स ऑफ एस्थिटिक्स-
Coleridges Litrary Criticism- By J.W.Mackail- London- 1921, University of north Corolina.
En. Wikipedia.org. William Wordsworth .
14 Internat Archive-

********

UGC - CARE Listed
शोधप्रभा
अक्टूबर-दिसम्बर, 2019
वर्ष : 44, चतुर्थोऽङ्कः

# बौद्धशिक्षायां मानवधर्मः

डॉ.ऋषिराजः*

**प्रमुखशब्दाः - भारतीयसंस्कृतिः, वैदिकशिक्षा, बौद्धधर्मः, प्रव्रज्या, शरणत्रयम्, दुःखत्रयम्, चत्वार्यार्यसत्यम्।**

जगत्यस्मिन् मानवीयसमाजे अस्माकं भारतीयसंस्कृत्या महत्त्वपूर्णं स्थानं वर्तते। संस्कृत्याः विकासेनैव मनुजेन सह राष्ट्रगौरवं राष्ट्रैश्वर्यं चापि वर्धते। अस्माकं राष्ट्रस्य सभ्यता संस्कृतिश्च बौद्धशिक्षायामेव निहितमस्ति। वयं जानीमः यत् साम्प्रतम् अस्माकं राष्ट्रे सामाजिकदृष्ट्या बहवः दुराचाराः व्याप्ताः सन्ति। एतस्मात् कारणात् समाजे सांस्कृतिकमूल्यानामपि ह्रासः परिदृश्यते। अतएव भारतीयसभ्यतायाः संस्कृतेश्च संरक्षणाय विकासाय तथा च मानवेषु नैतिकमूल्यानामभिवर्धनाय बौद्धशिक्षायाः ज्ञानमनिवार्यं भवेत् इतीदम् उद्देश्यं शोधाभिलेखस्य।

**"बहुजनहिताय,बहुजनसुखाय"**[1] उद्घोषोऽयं भारतीयसभ्यतायाः संस्कृतेश्च मूलमस्ति। पुराकालादेव भारतीयशिक्षाव्यवस्थायां प्राणिनां सेवा, जीवनं प्रति प्रेमभावना इत्यादीनां गुणानां समावेशोऽस्ति। वयं जानीमः यत् सम्पूर्णजगति विश्वसंस्कृतिषु भारतीयसंस्कृतिरस्माकं प्रथमा संस्कृतिरिति वेदे संस्तूयते-**"सा प्रथमा संस्कृतिर्विश्ववारा"**।[2] इयं हि संस्कृतिः वैदिकसंस्कृतिरित्यपि अभिधीयते। संस्कृतौ अस्यां मानवजीवनस्योद्देश्यानां पूर्तये विद्यायाः अन्यतमं स्थानं वर्तते। संस्कृतवाङ्मये विद्याशब्दोऽयमर्थं द्योतयति तमेवार्थं साम्प्रतिकयुगे शिक्षेति शब्दो द्योतयति। वेदाङ्गदृष्ट्या तु "शिक्षा" इति पदस्यार्थः अक्षराणां शब्दानाञ्च विशिष्टज्ञानमिति स्वीक्रियते। यथा- **"स्वरवर्णाद्युच्चारणप्रकारो यया शिक्ष्यते उपदिश्यते सा शिक्षा"**[3] एतदनुसारं शिक्ष्यते उपादीयते विद्या यया सा शिक्षा इत्यर्थो निर्गच्छति। अर्थात् यया प्रक्रियया विद्यायाः उपादानं ग्रहणं वा भवति सा शिक्षेत्यर्थः। शिक्षायाः विषये

*सहाचार्यः, शिक्षा-शास्त्रविभागः, राष्ट्रीयसंस्कृतसंस्थानम्, श्रीसदाशिवपरिसरः, चन्दनहजूरीरोड, पुरी-७५२००१ (उत्कलप्रदेशः)

1. विनय महावग्ग 1.11
2. यजुर्वेदः 7.14
3. ऋग्वेदभाष्य-भूमिकायां सायणाचार्यः

**अरस्तुमहोदयेनोक्तम् - "स्वस्थे शरीरे स्वस्थमनसः विकास एव शिक्षेति"।**[1] शास्त्रानुसारं भारतीयशिक्षायाः प्रादुर्भावः वैदिकशिक्षातः अभवत् इति मन्यते। वैदिकशिक्षायाः प्रमुखमुद्देश्यमस्ति प्राणिनां कृते **"मोक्षप्राप्तिः"।**[2] वैदिककालीनशिक्षा ऋग्वेदात् उपनिषद्पर्यन्तं खलु धर्मानुप्राणिता आसीत्। परञ्च वैदिकोत्तरकाले अर्थात् ब्राह्मणकाले देशकालपरिस्थितेरनुसारं वैदिकशिक्षायां ज्ञानकर्मणोः समन्वयस्य ह्रासः सञ्जातः। तस्मिन् समये स्थाने-स्थाने अधार्मिकपाखण्डस्य, अज्ञानान्धकारस्य हिंसायाः च प्राधान्यमासीत्, यज्ञादिषु कर्मसु पशुबलिः प्रदीयते स्म तथा च **स्त्रीशूद्रादीनां कृते श्रुतिर्निषिद्धा**[3] इति मन्यते स्मः। प्रत्येकं शुभकर्मणि धर्मिककृत्येष्वपि हिंसायाः प्राधान्यमासीत्। समाजे निबद्धकुरूतीनां निराकरणाय एवञ्च जगति सर्वेषां धर्माणाम्, जातीनाम्, वर्गाणाञ्च बालानां कृते समानशिक्षाव्यवस्थाकरणाय तथा च ब्राह्मणेतरवर्णानां मुक्त्यर्थं भारतवर्षे सौभाग्येन तस्मिन्नेव काले ई.पू. 563 तमे वर्षे शाक्यगणराज्यस्य कपिलवस्तुनगरस्य लुम्बिनीवने शालतरुमूले वैशाखमासस्य पूर्णिमायां पुण्यतिथौ महात्मनः गौतमबुद्धस्याविर्भावः जातः। गौतमबुद्धस्य प्रारम्भिकनाम सिद्धार्थः आसीत्। पञ्चत्रिंशत् वयसि सिद्धार्थेन बुद्धत्वं संप्राप्तम्। बोधिज्ञानप्राप्त्यनन्तरं सिद्धार्थः गौतमबुद्धः इति नाम्ना प्रसिद्धः अभवत्। बुद्धत्वप्राप्तेरनन्तरं ब्राह्मणशिक्षापद्धत्याः पतने सति भारते एका नूतनशिक्षा प्रादुर्भूता। सा च बौद्धशिक्षा इति नाम्ना ज्ञायते। बौद्धशिक्षायाः स्वरूपमपि वैदिकशिक्षासदृशं धार्मिकमेवासीत् परञ्च धार्मिकभावनायां कुरीतीनां कामपि स्थानं नासीत्। बौद्धशिक्षानुसारम् अस्यां सृष्टौ प्राणिनां कल्याणाय मानवधर्मः प्रमुखः वर्तते। जगत्यस्मिन् बौद्धशिक्षानुसारं मानवधर्मस्यः प्रकृतिः **"वसुधैव कुटुम्बकम्"**[4] इत्यनेन सम्बद्धोऽस्ति। बौद्धशिक्षायाः परमलक्ष्यम् आत्मज्ञानं वर्तते। बौद्धदर्शनानुसारम् आत्मज्ञानप्राप्त्यर्थं **"बुद्धं शरणं गच्छामि। धम्मं शरणं गच्छामि। संघं शरणं गच्छामि।"**[5] इति शरणत्रयस्योच्चारणं त्रिवारं विधाय मानवः बौद्धसङ्घे प्रविष्टो जायते स्म। बालकानां कृतेऽपि शिक्षायाः शुभारम्भः **"प्रवज्या"** (पब्बज्जा इति पालिभाषायां) संज्ञकसंस्कारेण भवति। संस्कारेऽस्मिन् प्रायशः अष्टवर्षीयो बालकः स्वगृहात् पृथक् भूत्वा सङ्घे प्रविष्टो जायते स्म। प्रवज्या संस्कारात्पूर्व पितुरनुमतिः अनिवार्या अस्ति। बौद्धसङ्घे प्रवेशानन्तरं सः मुण्डितशिरः, पीतपटः, अवनतशिखश्च सम्भूय भिक्षुं प्रणमति स्म। भिक्षोः सम्मुखं साञ्जलिमुपविश्य बालकेन शिष्यत्वग्रहणं क्रिरोति स्म। शिक्षादार्शनिकाः मन्यन्ते यत् यथा आस्तिकदर्शनान्तर्गते सांख्यदर्शनस्य मते प्राणिनां कृते लोके **त्रिविधं दुःखं**[6] व्याप्तं वर्तते। दुःखनिवारणानन्तरं कैवल्यप्राप्तिः

1. "शिक्षा दर्शन",प्रो.भास्कर मिश्र,नाग पब्लिकेशन,जवाहर नगर- नई दिल्ली
2. "सा विद्या या विमुक्तये" कठोपनिषद्
3. "स्त्रीशूद्रद्विजबन्धूनां च वेदश्रवणं मतम्" देवी भगवतम् 1.3.21
4. अयं निजः परोवेति गणना लघुचेतसाम्। उदारचरितानां तु वसुधैव कुटुम्बकम् ।। (हितोपदेशः)
5. यो च बुद्धं च धम्मं च संघं च सरणं गतो। चत्तारि अरियसच्चानि सम्मप्पञ्ञाय पस्सति।। (धम्मपद गाथा-190)
6. ईश्वरकृष्ण विरचितेन सांख्यकारिकानुसारं- "आध्यात्मिकं, आधिदैविकं, आधिभौतिकम्

अस्य दर्शनस्य प्रमुखं प्रयोजनं वर्तते। तथैव बौद्धधर्मानुसारं भिक्षोः प्रमुखं प्रयोजनमस्ति- **"संसारे व्याप्तदुःखस्य निवारणम्"**। प्राणिषु व्याप्तदुःखस्य निर्मूलनाय बौद्धदर्शनान्तर्गते मध्यममार्गस्य अनुसरणस्य उपरि बलं दीयते स्म। गौतमबुद्धस्य मते मध्यममार्गस्य अनुपालनं **चत्वार्यार्यसत्यस्य**[1] ज्ञानेनैव सम्भवति तद्यथा-

◆ **दुःखमस्ति** - गौतमबुद्धस्योपदेशानुसारं चराचरजगत्यस्मिन् प्राणी: जन्मतः मृत्युपर्यन्तं दुःखमयं जीवनयापनं करोति। अयमेव क्रमः मृत्युरनन्तरमपि सञ्चाल्यते। वयं जानीमः यत् पुराकालात् अधुनापर्यन्तमेव जगति सर्वत्र दुःखमयं वातावरणं प्रसृतम् अनुभूयते। अद्यापि व्यक्तिगतस्थितौ, पारिवारिकस्तरे, सामाजिकवृत्तौ देशस्य मानचित्रे वैश्विकपरिप्रेक्ष्ये अशान्तेः नरीनर्तनम् अवलोक्यते। अस्याः अशान्तेः बहूनि कारणानि सम्भवन्ति। कारणभूताः निम्नाः समस्याः परिगण्यन्ते विशेषज्ञैः- द्वेषः, ईर्ष्या, हिंसा, क्रोधः, व्याधिः, अशिक्षा, असमानता,वर्णभेदः, क्षेत्रभेदः, अन्धविश्वासः, जातिवादः, निर्धनता, भ्रष्टाचारः, आतंकवादः, आजीविकाभावः, प्रियस्य वियोगः, अप्रियस्यसंयोगः, पर्यावरणप्रदूषणं, साम्प्रदायिकतादयः दुःखस्य कारणानि सन्ति। योगदर्शनेऽपि कथ्यते स्मः - **"दुःखमेव सर्वं विवेकिनः"**[2] इति। अर्थात् विवेकिपुरुषेभ्यः जगत्यस्मिन् सर्वमपि दुःखमस्ति। महात्मा गौतमबुद्धः अस्यां सृष्टौ प्रतीत्यसमुत्पादमधिकृत्य ( कार्य-कारणसिद्धान्तम्) मानवजीवने सुखमपि दुःखमेव इति मन्यते स्म।

◆ **दुःखस्य कारणमस्ति** - वयं जनीमः यत् प्राकृतिकदृष्ट्या जगत्यस्मिन् कार्यकारण भावेन प्राणिनां जीवनं सञ्चाल्यते। अतएव दुःखस्य अपि किमपि कारणमवश्यमेवास्ति। गौतमबुद्धानुसारं दुःखस्य प्रमुखं कारणं जीवतृष्णा अस्ति, या अज्ञप्राणिषु पुनर्पुनः उत्पन्ना भवति एवञ्च यस्यां दुःखस्य बन्धनं भवति। संसारेऽस्मिन् प्राणीनां कृते तृष्णायाः त्रयः भेदाः सन्ति-




बौद्धदर्शने कथ्यते यत् प्राणीतृष्णायाः वशीभूतः भूत्वा कार्यं करोति। यया अनायासतया तेषां जीवने दुःखस्योत्पत्तिः भवति। सन्दर्भेऽस्मिन् उच्यते-

**मनोपुब्बङ्गमा धम्मा मनोसेट्ठा मनोमाय।**
**मनसा चे पदुट्ठेन भासति वा करोति वा।**

---

1. "दुःखसमुदायनिरोधमार्गाश्चत्वारः आर्यबुद्धस्याभिमतानि तत्वानि" सर्वदर्शनसङ्ग्रहः पृ. 76
2. पातञ्जलयोगदर्शनम्

**ततो नं दुःखमन्वेति चक्कं व वहतो पदं।।"[1]**

अतएव अस्याः तृष्णायाः उन्मूलनमेव प्राणिनां प्रमुखम् उद्देश्यमस्ति। यत् मनसः नियन्त्रणेनैव सम्भवति। अर्थात् यदि वयं निर्मूलनेन किमपि कार्यं कुर्मः तर्हि तस्य परिणामः सुखमयः भवति। उच्यते च-

**मनोपुब्बङ्गमा धम्मा मनोसेट्ठा मनोमाय।**
**मनसा चे पसन्नेन भासति वा करोति वा।**
**ततो नं सुखमन्वेति छाया व अनपायिनी।।[2]**

◆ **दुःखस्य निवारणमस्ति** -बौद्धदर्शने तृतीयमेतत् आर्यसत्यमस्ति। गौतमबुद्धः उपदिशति यत् प्राणिषु कार्य-कारणभावेन दुःखस्य प्रकटनं भवति। मानवजीवने दुःखस्य प्रमुखानि कारणानि अविद्या, संस्कारः, विज्ञानं, नामरूपं, षडायतनं, स्पर्शः, वेदना, तृष्णा, उपादानं, भवः, जातिः, जरामरणञ्चेत्यादयः सन्ति। अतः यदा मानवः स्वयमेव अविद्यारूपि तृष्णायाः विनाशं कर्तुं सक्षमः भवेत तदा तस्य जीवने दुःखमऽपि विनष्टं भवितुमर्हति। अस्य दुःखनिवारणमेव निर्वाणमिति कथ्यते।

◆ **दुःखस्य निवारणोपायः अस्ति** - दुःखनिवारणस्य मार्गोऽस्ति अर्थात् अविद्यायाः विनाशाय अष्टाङ्गमार्गस्य अनुपालनं यदा मानवः करोति तदैव त्रिविधदुःखं नष्टं भवति। शिक्षाशास्त्रिणः वदन्ति यत् यदा मानवः मनसा-वाचा-कर्मणा अष्टाङ्गमार्गे प्रवृत्तो भवति तदैव दुःखस्य निवारणं भवति। अष्टाङ्गमार्गेव मध्यममार्गोऽपि कथ्यते। बौद्धदर्शने अष्टाङ्गमार्गान्तर्गते अष्टांङ्गानि मन्यन्ते तद्यथा **"सम्यक् दृष्टिः, सम्यक् सङ्कल्पः, सम्यक् वाक्, सम्यक् कर्म, सम्यक् आजीविका, सम्यक् व्यायामः, सम्यक् स्मृतिः, सम्यक् समाधिश्चेति"[3]** महात्मागौतमबुद्धस्य मते अष्टाङ्गमार्गोऽयं शीलः, समाधिः, प्रज्ञा इत्यादिभिः सम्बद्धोऽस्ति। यस्या प्रादुर्भावेन मानवः सांसारिकदुःखात् मुक्तिं प्राप्नोति। यथा उच्यते-

**शीलं समाधिप्रज्ञा च विमुक्तिं च अनुत्तरा।**
**अनुबद्धा इमे धम्मा गौतमेन यसस्सिना।।[4]**

अर्थात् ये जनाः स्वकीयजीवने बौद्धदर्शने निबद्धानि त्रयाणां रत्नानाम् अनुपालनं कुर्वन्ति अर्थात् स्वजीवने सम्यगाचरणं कुर्वन्ति, सम्यक् विपश्यनां कुर्वन्ति एवञ्च सम्यक् ज्ञानं प्राप्नुवन्ति ते संसारेऽस्मिन् सांसारिकदुःखात् मुक्तिं प्राप्तुं समर्थाः भवन्ति।

---

1. धम्मपद गाथा - 1
2. धम्मपद गाथा - 2
3. "इदं खो पन भिक्खवे दुक्ख निरोधगामिनी पटिपदा अरियसच्चं, अठ्ठाङ्गीको मग्गो, सेय्यथे द सम्मा डिठ्ठि सम्मासं कप्पो सम्मा वाचा, सम्मा कम्णं तो सम्मा आजीवौ, सम्मा वायामो समासन्ति, सम्मा समाधि" इति तैरूकत्त्वात् सर्वदर्शनकौमुदी, पण्डितदामोदर महापात्रशास्त्री, उडीसा साहित्य अकादमी, भुवनेश्वर, पृ. 273
4. दीर्घनिकायः

वयं जानीमः यत् अधुनापि जगति, राष्ट्रे, समाजे अशिक्षा, असमानता, ईर्ष्या, द्वेषः, हिंसा, असत्यवाक, परनिन्दा, क्रोधः, शारीरिकमानसिकव्याधिः, वर्णभेदः, क्षेत्रभेदः, अन्धविश्वासः, जातिवादः, निर्धनता, आजीविकाभाव, प्रियस्य वियोगः, अप्रियस्य संयोगः, भ्रष्टाचारः, दुराचारः, साम्प्रदायिकता, आतंकवादः, असहिष्णुता, मादकपदार्थानां सेवनं, पर्यावरणप्रदूषणं चेत्यादयः समस्याः दुःखरूपेण मानवीयजीवने व्याप्ताः सन्ति। येन मानवजीवनं पूर्ण-रूपेण अशान्तं भवति। बौद्धदार्शनिकाः मन्यन्ते यत् यदा मानवः विपश्यनायाः माध्यमेन कर्मणि प्रवृत्तो भवति। बौद्धधर्मः मानवान् उपदिशति यत् जगत्यस्मिन् निर्माणं प्राकृतिकमस्ति तथा च समस्तसृष्टेः सर्जनं अनादिकालात् अज्ञेयं, निर्विकारमव्यक्तं, सत्यस्वरूपमस्ति अत एव प्रकृत्येव मानवीयधर्मः अस्ति। तेषां मते धर्मः निरपेक्षः नास्ति अपि तु धर्मः सार्वभौमिकः, सापेक्षः, सार्वकालिकश्च भवति एवञ्च पंथनिरपेक्षः भवति। विपश्यनायाः माध्यमेनैव मानवस्य चित्तं निर्मलं,निश्छलं निष्कलंकञ्च भवति एवञ्च अविद्यायाः निवारणेन स्वतः एव दुःखात् निवारणं भविष्यतीति। तथा च मानवेषु परस्परं मानवधर्मानुरूपं विश्ववन्धुत्वं, **वसुधैव कुटुम्बकम् इति धारणायाः,** सहिष्णुतायाः, **अहिंसायाः**[1] , नैतिकतायाः, चारित्रिकतायाः समावेशः सम्यग्रूपेण भविष्यति।

**सन्दर्भग्रन्थसूची :-**

1. बुद्धचरितम्, अश्वघोषविरचितम्
2. बौद्धदर्शनमीमांसा, आचार्यबलदेवउपाध्यायः
3. धम्मपदम्, चौखम्बा-विद्याभवन-वाराणसी
4. बौद्धदर्शनम्, राहुलसाङ्कृत्यायनः
5. भारतीयदर्शन का परिशीलन, त्रिपाठी, डा. रमाशंकर, भारतीय विद्या संस्थान-वाराणसी
6. बौद्ध धर्म के मूलसिद्धान्त, धर्मरक्षितभिक्षुः
7. प्रमाणवार्तिकम्, आचार्यधर्मकीर्तिविरचितम्
8. दीर्घनिकायपालि, बौद्धभारती- वाराणसी
9. हितोपदेशः,
10. बौद्धधर्म-दर्शन, डॉ. नरेन्द्र देव, मोतीलाल बनारसीदास, दिल्ली

---

1. अहिंसा सब्बपाणानं अरियोत्ति पुव्वुच्चति। धम्मपद गाथा -270

UGC - CARE Listed
अक्टूबर-दिसम्बर, 2019

शोधप्रभा
वर्ष : 44, चतुर्थोऽङ्कः

# 'जानकीजीवन' महाकाव्ये युगबोधविमर्शः"

**डॉ. दिनेशकुमारगर्गः***

प्रो0 राजेन्द्रमिश्रप्रणीते 'जानकी जीवनमिति महाकाव्ये युगानुकूला परिस्थितिर्वर्णिता वर्तते। तत्र सामाजिकी स्थितिः, राजनैतिकी स्थितिः, धार्मिकी स्थितिः, अथ च आर्थिकी स्थितिः, तदानीन्तने काले कीदृश्यासीत्। ताश्च क्रमशो निरूप्यन्ते।

**सामाजिकी स्थितिः-** यस्मिन् समाजे कविर्वसति, तस्य यादृशी स्थितिर्भवति, तस्य वर्णनं कविता माध्यमेन करोति। श्रीमिश्रस्य - कृतावपि तादृशस्य समाजस्य स्वरूपं समवलोक्यते।

**समाजस्य स्वरूपम्-**आदिकालत एव समाजे वर्णानामाश्रमाणाञ्च वर्णनं यत्र-तत्र-सर्वत्राऽवाप्यते। यथा- ऋग्वेदे-

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।**
**ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत।।**[1]

एतेन समाजे चतुर्विधा वर्णव्यवस्थाऽऽसीत्। जानकीजीवनमहाकाव्येऽपि कविवर्यैः चतुर्विधानां वर्णानां निरूपणं कृतम्। यथा-

**गोवाजिसिन्धुधारा भवनान्नवस्त्रैस्तुष्टा द्विजा निगमपारमिताऽवोचन्।**
**नो दृष्टपूर्व इह सौम्य सुखः पृथिव्यां श्रीराघवेन्द्रसदृशः सततं समृद्धः।।**[2]

श्लोकेऽस्मिन् भगवता रामचन्द्रेण ब्राह्मणेभ्यो गोऽश्वगजभूम्यादयः प्रदत्ताः। महाकाव्येऽग्निपरीक्षावर्णनप्रसंगे जानकी वारत्रयं ब्राह्मणानां परिक्रमणं कृतवती।[3] एवमेव क्षत्रियाणामपि महत्ताऽऽसीत्। तत्र रघुवंशीयक्षत्रियाणां विस्तृतं वर्णनमस्ति।[4] चक्रवर्तिनो दशरथस्य प्रधानाऽऽमात्यः सुमन्त्रो यत्र स्यात्, तत्र शासनार्थे क्षत्रिय एव योग्यतमः, ब्राह्मणास्तूपदेष्टारो भवन्ति। यथा- शतपथ ब्राह्मणे प्रोक्तम्- 'न वै ब्राह्मणानां राज्यालयम्'[5]।

---

*सहाचार्यः
प्राचीनराजशास्त्रार्थशास्त्रविभागः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी।

1. ऋग्वेदे- 10.90.12
2. जानकीजीवनम्- 20/4
3. तत्रैव- 20/20
4. तत्रैव- 4/4
5. शतपथ ब्राह्मणे- 2/1/112

श्री राघवस्य शासनकाले ईतिभीतिरहितं सौराज्यमासीत्। अत्र श्रीमिश्रपादैरवादि

**राघवे वसुधां प्रशासत्यञ्जसा स्थापितं परितोऽपि सौराज्यं नवम्।**
**ईतिभीतिविमोचिताऽयोध्या बभौ नायिकाश्रितवल्लभेव प्रोन्मदा।।[1]**

क्षत्रिया युद्धकलायां दक्षा आसन्। विश्वामित्रस्य कृपातः दिव्यास्त्राणां परिज्ञानेनैव रामलक्ष्मणौ सुबाह्वादिराक्षसान् यमपूरीमनयताम्। अथ च वैश्य वर्णानामपि प्राधान्यं तात्कालिके समाज आसीत्। यथा- वायुपुराणे- 'कृषि गोंरक्ष्यं वाणिज्यं वैश्य कर्म स्वभावजम्'।[2] मिथिलायां कृषकानां कृषि कर्म दृष्ट्वा रामलक्ष्मणौ सानन्दतां गतौ। वाणिज्ये पण्यबीथिकाया वर्णनं श्रीमिश्रमहोदयैः कृतमस्ति। अथ च गजाश्वधवनिभिः परिपूरितः स्वयंवरमण्डप[3] आसीत्। अश्वमेधायज्ञाऽवसरे वणिजां गन्धाघृतभोज्यद्रव्यानां संग्रहणेन तात्कालिके समाजे वैश्यानां महत्वपूर्णं स्थानमासीत्।[4] महाकाव्येऽस्मिन् यद्यपि शूद्रशब्दस्य प्रयोगः प्रत्यक्षतो नैवाऽस्ति। किन्तु विशारद- कर्मान्तिकयन्त्रकखनकबेधा-ककुम्भकारादीनां बहुधा प्रयोगो यत्र-तत्र दृश्यते। युगेऽस्मिन् चतुर्ण्णां वर्णानां, विविधजातीनां पारस्परिकं सौहार्द सहयोगभावना चाऽऽस्ताम्।[5]

**समाजे स्त्रीणां स्थितिः-**

भारतीये समाजे प्राचीनकालत एव स्त्रीणां प्रधानं स्थानमभूत्। आचार्यमिश्रपादैः प्रणीतेन महाकाव्येन ज्ञायते यत् नारीः विना कोऽपि संस्कारो न भवति स्म। तत्रोक्तम्- विवाहविधेः सम्पन्नतां प्राप्ते सति, राजा जनकः सुनयनया सह कन्यादानार्थ समुपस्थितोऽभूत्।[6] स्त्रियाः परामर्श विना किमपि कार्य न भवितुं सक्नोति स्म। यथा-

**अथागते मगंललग्नकाले निजाङ्गजा स्वामिकुलप्रयाणम्।**
**व्यचिन्तयद्भमिपतिर्महिष्या सहैव सम्मन्त्र्य कुलानुरूपम्।।[7]**

उक्तश्लोके जनकेन सुनयनायाः सहमतिं नीत्वैव स्वीयतनयां सीतां श्वसुरगृहं प्रेषयितुं विनिश्चितम्। तत्कालीने समाजे स्त्रीणां प्रसादार्थं वस्त्रादीनि समर्प्यन्ते स्म। नार्यः पतिप्रसन्नतैव परं कर्माऽऽसीत्। यथा-

**''राघवात् प्रथमं विहाय धारा शय्यां जानकी दयितं प्रबोधितवत्युदारा''।।[8]**

अतिथि सत्कारोऽपि स्त्रीणां कृते महत्तरः आसीत्। यथा-

**'राघवं मुनयो निभालयितुं य एताः कामदेऽनुदिनं स्फुटप्रघुणोपचारम्।**

---

1. जानकी जीवनम्- 17/1
2. वायुपुराणे- 8.16.4
3. जानकी जीवनम्- 7/28
4. तत्रैव- 20/10
5. तत्रैव- 17/8
6. तत्रैव- 8/27
7. तत्रैव- 8/48
8. तत्रैव- 11/6

**सिद्धपाककलाऽमृतातिशयेन तेभ्यः सा समर्प्य ररक्ष राघवगेहिनीत्वम्।।'[1]**

नारीणामाकांक्षापूर्तिः पुरुषाणां परमकर्तव्यमासीत्। महाकाव्ये राज्ञा दशरथेन आकांक्षापूर्तिविषयकं वाक्यमुच्यते-

**अथाऽद्यैव ते कामनां पूरयिष्ये पणीकृत्य मज्जीवितञ्चापि देवि।**
**प्रमाणं तदेवाऽस्तु मे त्वत्परस्य स्वमाकांक्षितं प्रस्फुटं ब्रूहि राज्ञि।।[2]**

तथा स्त्रीः प्रति प्रशंसा राजा दशरथेन कृता- यथा-

**परं भावुकाः कम्रधीः कोमलात्मा परं मानिनी कैकेयी मत्प्रियासु।**
**तथाप्यात्मजाताधिकं निर्विकारं मयाऽऽलोकितं प्रेम रामे तदीयम्।।[3]**

सीतायाः पतिव्रतात्वविषये कथ्यते-

**मनो न मे राघवपादपङ्कजं गतं यदि क्वापि विमुच्य जीवने।**
**तदद्य मा रक्षतु सर्वतो मुखं ह्युशीरशीतो भगवान् स पावकः।।[4]**

तथोक्तसमस्तकथनेन नारीणां वैशिष्ट्यं प्रतिभाति।

**पारिवारिकं जीवनम्-** तदानीन्तने समाजे पारिवारिकं जीवनं सुसंगठितमासीत्। पिता कुटुम्बस्य तस्योत्तरदायित्वमासीत्। तदधिकृत्यैव पितुः कर्त्तव्यं निर्वहन् सीतायाः स्वयंवरस्य घोषणां कृतवान्-

**य एव वीरोऽक्षतशम्भुचापं द्रुतं समुत्थाय पिनाकमुच्चैः।**
**गुणञ्च दण्डेन युनक्ति सोऽसौ सीतापतिर्लोकसमक्षमद्य।।[5]**

विवाहानन्तरं पतिगृहे निवसन्ती सीता बहवो यत्कर्माऽभूत्। तत् सर्व सम्पादयतिस्म। यथा- प्रातरुत्थाय श्वश्रूश्वशुरयोः पत्युश्च चरणान् नमतिस्म। समस्तस्य कुटुम्बस्य प्रातराशं साधयति स्म। सर्वान् प्रति यथायोग्यं समादरञ्च चकार। यथा-

**नेदं मुग्धो प्रयाचेऽहं किञ्चिदन्यमीप्सितम्।**
**अन्य एवं नु ते वाणा अन्यदेव शरासनम्।।[6]**

परस्परं परिहासादिकमप्यभूत्। यथा- उर्मिला सीतां कथयति-

**आर्य! स्वदेवरं पश्य मा दुनोतु कटूक्तिभिः।**
**मिथिला शिथिलेत्येवं पङ्किलाप्युर्मिलेति च।।[7]**

एतेन पारिवारिकं जीवनमप्रथग्भूतं सन्मतियुक्तं परस्परादरं प्रदायकञ्चासीत्।

मनोरञ्जनस्य साधानानि- मानवजीवने मनोरञ्जनस्याति विशिष्टं स्थानं वरीवर्ति। येन विना

1. तत्रैव- 11/11
2. तत्रैव- 10/60
3. तत्रैव- 10/3
4. जानकीजीवनम्- 15/69
5. तत्रैव- 7/33
6. तत्रैव- 9/56
7. तत्रैव- 9/69

शरीरं सुस्थास्थ्यं न लभते। तदर्थं विभिन्नाः क्रीताः समायोज्यन्ते स्म। तथा- दोलाक्रीडा, जलक्रीडा, उद्यानविहारादिकं प्रधानत्वेनाऽवर्तत। तत्र जलक्रीडोदाहरणरूपेण प्रस्तूयते-

**स्पृशत् पुरो वर्तितां प्रतीर्य का द्रुतं पराभूय समस्त सनीः।**
**इति प्रतिस्पर्धिततोयधावनालय वापी शफरातिशायिनी।।''[1]**

अपि च-

**क्षिपामि शैलेय कन्दुकं जले निभालये काऽऽनयतीदमादिमा।**
**अथर्वमुद्घोष्य धृति प्रवचने जहास सर्वा अवगाहकम्पिताः।।[2]**

एवं प्रकारेण जले कन्दुक्रीडामाध्यमेन मनोरञ्जनं कुर्वन्तिस्म, तदानीं तनाः जनाः।

**राजनीतिकी स्थितिः-**

वेदयुगादारभ्याधुनिकयुगपर्यन्तं राजनीतिकाः पक्षाः विविधेषु स्थलेषु सम्प्राप्यन्ते। रामराज्यस्य परिकल्पना या भारतीयराजनीतौ आदर्शरूपा वर्तते। एतत्परिकल्पनाया जनकः वाल्मीकि-ऋषिरासीत्। येन रामराज्यस्य सुखदं मनोहारि चित्रणञ्चाकारि। आचार्यः शुक्रो ब्रूते-''न रामसदृशो राजा पृथिव्यां नीतिमानभूत्'' तत्र राजनीतेः परमपोषको भगवान् रामचन्द्रोऽभूत्। स्वेषु कर्मषु योजनार्थं राजा दण्डाद्युपायानां संप्रयोक्ताऽऽसीत्।[3]

उक्तञ्चार्थशास्त्रे-

**प्रजासुखे सुखं राज्ञः प्रजानाञ्च हिते हितम्।**
**नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम्।।[4]**

राजा प्रजाया सेवको भवति, अत्र वशिष्ठेनोक्तम्-

**पूर्वं प्रतिजातमिदं नृपेषु यत्सेवकोऽसौ विनतः प्रजानाम्।**
**प्रजामनोवृत्ति परीत राज्यं युनक्ति रामो न निरङ्कुशोऽसौ।।[5]**

प्रजाया मनोवृत्तिं ज्ञात्वैव राजा राज्यं सञ्चालयति स्म। तदानीं तने युगे राजा समेषां ऐकमतेनैव कोऽपि निर्णयो भवतिस्म। उक्तञ्च तत्रैव-

**'एकं मतं नैव मतं समेषां निरर्थकं तत्खलु लोकतन्त्रे।।[6]**

रामराज्ये प्रजाया महत्वं स्वीकुर्वन् राजा वक्ति-

**प्रजा मनोवृत्तिसमर्थनम्मे श्रद्धेयकृत्यं प्रथमं वरिष्ठम्।**
**प्रजाहितं प्रीततमं महिष्ठं प्रजैव सर्वं किल रामराज्ये।।[7]**

तद्युगे न्यायप्रियो राजा बभूव। समेषां जनानां न्यायः कथं मिलेत्, तस्य व्यवस्था

---

1. तत्रैव- 2/25
2. तत्रैव- 2/28
3. जानकीजीवनम्- 17/54
4. अर्थशास्त्रसे- 1/9
5. जानकीजीवनम्- 18/46
6. तत्रैव- 18/68
7. तत्रैव-18/111

तेनैव प्रत्यपादि। राजा स्वीयोत्तराधिकारिणो नियुक्तिं विधाय, स्वकार्यतो विमुच्यते स्म। राजा दशरथः स्वकर्म विमोक्तुं मन्त्रिपरिषदं प्रार्थयति- यतः-

**अयं राज्यभारोऽधुनाऽऽरोपणीयो दृढ़स्कन्धयोः रामचन्द्रस्य शीघ्रम्।**
**स एवाऽस्ति धर्मेण पुत्रक्रमेण प्रजाऽऽकांक्षितेनापि योग्यो महिम्नः।।**[1]

राजा स्वीयराष्ट्रस्योत्थानाय प्रजायाः सहयोगः सदाऽपेक्ष्यतेस्म। यथा-

**प्रजाजनानां सहयोगभावस्त्वपेक्ष्यते तत्र सदैव भद्र।**[2]

इत्थं महाकाव्ये राजनीतिर्वर्णिताऽस्ति।

**शासनव्यवस्था**-शासनप्रणाली सुदृढाऽऽसीत्, कस्यचिदपि जनस्य दुःख- संकटाकालमृत्वादयो न भवन्ति स्म। उक्तञ्च-

**दुःखं न जातु ददृशे पुरि नापमृत्युः,**
**नैवात्ययोऽपि महतां वचनीयता नो।**
**कौलीनभीतिरथवा द्रविणापहारो,**
**राज्यं प्रशासति नृपे त्वजनन्दनेऽस्मिन्।।**[3]

राज्यसञ्चालनार्थं राज्याधिकारिणां महाकाव्ये वर्णनमभूवन्- तत्र महामात्यः, सचिवः, मण्डलाधिपः, भटाः, सेनापतिश्च, एते प्रमुखा अधिकारिणो भवन्ति स्म। यथा- तत्र- 'रावणस्य प्रधानामात्यः प्रहस्त आसीत्-

**प्रहस्तमवधीद्रणे धृतशिलो हि नीलोऽक्षतः।**[4]

सैन्य सञ्चालनार्थं सेनापतयोऽभूवन्-

**महोदरसुरक्षितं स्फुरदवाङ्मुखं गोपुरम्।**
**रुरोधा प्रतनापतिः प्रथितबलिपुत्रेऽदः।।**[5]

एवमेव राजकीयकार्यसम्पादनार्थं 'दूतस्य' महत्वमासीत्। तनैव परराष्ट्रराजनीतिः ज्ञायते। दूत एव सन्धिप्रस्तावं नीत्वा परराष्ट्रं गच्छति स्म। यथा-अदः सन्धिप्रस्तावं नीत्वा रावणसभां गतवान्। अथ सीतां प्रति हनुमदुक्तिः

**अवेहि मामम्ब तदीयदूतं यस्य स्मृतौ जीवितकातराऽसि।**[6]

अथैवं राज्यस्याधिकारिणः स्वकर्त्तव्यं पालयन्तः शासनतन्त्रं व्यवस्थापयन्तो राज्ञः सर्वथा सहयोगिनोऽभूवन्।

**दण्डव्यवस्था**- जानकीजीवनमहाकाव्ये दण्डव्यवस्थाया अपि परिचयोऽवाप्यते। सीताजनापवादप्रसंगे कुलगुरुर्वशिष्ठो वक्ति यद् 'धर्मशास्त्रविरुद्धाचरणशीलेऽपराधी

1. तत्रैव- 10/10
2. तत्रैव- 18/113
3. जानकीजीवनम्- 4/6
4. तत्रैव-14/50
5. तत्रैव- 14/34
6. तत्रैव- 13/31

भवितुमर्हति। स एव दण्डनीयः, किन्तु साधुतायाः सज्जनतायाः गुणवत्तायाश्च प्रतिमूर्तिः सीता कस्मादपराधाद् दण्डनीया भवति। यथा–

**दण्डोऽपराद्धः खलु धर्मशास्त्रे न साधुताशीलगुणार्जवानि।**
**न वेद्मि वैदेहसुतापराधां कस्माद्धि दण्ड्या खलु पट्टराज्ञी।।[1]**

रजकस्य स्वापराधबोधो सति रामः तं प्रति दयामेव दर्शयति। तत्र तेनोच्यते– यः सज्जनः, तस्य न भयं, किन्तु, योऽसज्जनः, तस्य रक्षाऽपि नाऽस्ति। यथा–

**भयं न रामादिह सज्जनानामसज्जनानामपि नैव रक्षा।[2]**

एवं दण्डव्यवस्थाविषयकं वर्णनं बहुत्रे महाकाव्ये दरीदृश्यते।

**धार्मिक स्थितिः–**

भारतीयसमाजे प्राचीनकालत एव धर्मस्य महती प्रतिष्ठाऽऽसीत्। महर्षिकाणादमते– ''यतोऽभ्युदयनिः श्रेयससिद्धिः स धर्मः''। अर्थात् यस्मात् लौकिकोन्नतिः, मोक्षावाप्तिश्च भवेत् स एव धार्मः। अत्र महाकाव्ये धर्मस्वरूपस्य प्रतिपादनं कृतं वर्तते। तत्रतत्र निरूपितैः धर्मलक्षणैः सह साम्यमादधाति। चतुर्वर्णाः दानादिकर्माणि कुर्वन्तः परस्परं सौहार्दमादधाना धर्ममार्गे रता आसन्। यथा–

**स्वं स्वं नियोगमनुजग्मुरथाप्रमत्ताः सद्भावमलयुताश्च तुरीयवर्षाः।**
**सत्यैस्तपोभिरतुलैस्सुमुखैश्च दानैः धर्मचतुष्पदयुतस्समवाप काष्ठाम्।।[3]**

उक्तकथनं मनूक्त[4] धर्ममार्गमनुगच्छति। यथा तेन प्रत्यपादि–

**एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।[5]**

महाकाव्ये शैवधर्मस्य, अथ च सीता द्वारा पार्वत्यर्चनादीनां वर्णनं सम्यक्तया प्राप्यते।

**आर्थिकी स्थितिः–**

महाकाव्ये कृषिवाणिज्यपशुपालनादिभिरर्थोपार्जनस्य चर्चा कृता वर्तते। यथा– रामलक्ष्मणाभ्यां कृषीवलैः कृतं कृषिकार्य तत्फलभूतं सस्यादिकञ्च विलोक्य सस्मितौ सञ्जातौ। यथा–

**परितस्सरणिं कृषीवलैः क्रियमाणं वपनाभिषेचनम्।**
**हलकर्षणघासवारणं परिवीक्ष्याऽभवतां स्मिताननौ।।[6]**

एवं महाकाव्येऽश्वमेघयज्ञावसरे रामः भरतं चणकमाषादिधान्यं एकत्री कर्त्तु

1. तत्रैव– 18/73
2. तत्रैव– 18/112
3. जानकीजीवनम्– 20/5
4. धार्म लक्षणम्– घृतिक्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।। मनु0– 6/92
5. मनु0– 2/7
6. जानकीजीवनम्– 5/6

प्रेरयति। यथा-

**गन्धं घृतं चणकमाषकुलित्थमृद्गब्रीह्यन्नतण्डुलतिलादि विभोज्यताम्।।**[1]

अनेन कथनेन तद्युगे कृषिकर्म सम्यक्तयाऽभूत्। पशुपालनमपि भवतिस्म। अत एव वरयात्रऽवसरे दशरथेनोक्तम्-

**'मत जारूढ इयाय कश्चित् क्रमेलकोत्तुङ्गककुत्स्थितो वा।'**[2]

अपि च-

**'गजशालाऽश्वशाला च पक्षिशालाऽथ मन्दुरा।।'**[3]

वाणिज्याऽपि भवतिस्म। अयोध्यापुरी व्यापारिणां वर्णनमस्ति-

**'समागता वैकटिका धनाढ्या व्यापारिणो नागरसार्थवाहाः'।।**[4]

अतो महाकाव्ये आर्थिकस्थितेरपि सम्यग् वर्णनं कृतमस्ति।

**सारसंक्षेपः-** महाकाव्यं प्रो0 मिश्रपादैः तात्कालिके युगे समाजस्य राष्ट्रस्य च ये पक्षाः सम्भाविताः ते सर्वे तैः प्रकटीकृताः। सामाजिकीस्थिति द्वारा चतुर्वर्णानामाश्रमाणाञ्च यादृशी परिस्थितिरासीत्, तस्या, समीचीनो विचारः कृतोऽस्ति। तत्र स्त्रीणां का स्थितिः, पारिवारिकं जीवनं सीदृशं सुगठितमासीत्, अथ च मनोरञ्जनस्य कानि साधनानि आसन्। एवं राजनीतिका अनेके पक्षाः समुद्घटितास्तैः। तत्र राज्ञः किं कर्तव्यं, प्रजायाः किं कर्म, अथ च अमात्यादीनां कीदृशी स्थितिरासीत्, शासनव्यवस्था कीदृशी चाऽऽसीत्। कीदृशी दण्डव्यवस्थाऽऽसीत्। सर्व तैः चिन्तितम्। तद्युगे धार्मिकी स्थितिः कीदृशमासीत्। समानं धर्म प्रति कीदृश आदर आसीत्। पापभयात् जना असन्मार्गात् दूर आसन् आर्थिकी स्थितेरपि चिन्तनं तत्र वर्तते। तत्र कृषिपशुपालनवाणिज्यादयः अर्थोपार्जनस्य साधनभूता अभूवन्। अन्ते- जानकीजीवनमहाकाव्यं बहुशिक्षाप्रदं वर्तते। अस्याऽध्ययनेन तात्कालिकयुगस्य सम्यगवबोधो भवति

********

1. तत्रैव- 20/10
2. तत्रैव- 08/11
3. तत्रैव- 9/5
4. तत्रैव- 18/5

UGC - CARE Listed
शोधप्रभा
अक्टूबर-दिसम्बर, 2019
वर्ष : 44, चतुर्थोऽङ्कः

# पुराणेषु वृक्षायुर्ज्ञानम्

श्रीखेमराजरेग्मी*

पर्यावरणस्य सुरक्षायाः कृते वृक्षसम्पत्तेः अनिवार्यता अनादिकालात् स्वीकृताऽस्ति। वैदिक-ऋषयः भू-सन्तुलने वृक्षान् आवश्यकं मत्वा एतेषु देवत्वम् आरोपयन्त एतान् मातृवत्पूजनीयाः मन्यन्ते आसन्। अस्या एव परम्परायाः निर्वहणं कुर्वन् पुराणकालेऽपि[1] वृक्षविद्यायाः विशेषं महत्त्वम् अदत्त।

अग्निपुराणे, विष्णुधर्मोत्तरपुराणे मत्स्यपुराणे च वृक्षायुर्वेदाध्याया उपलब्धास्सन्ति। ब्रह्मवैवर्तपुराणे, पद्मपुराणे, हरिवंशपुराणे, ब्रह्माण्डपुराणे, वायुपुराणे च वृक्षारोपणविधयः उपवर्णितास्सन्ति।[2] महावराहपुराणे मत्स्यपुराणे च 'वृक्षारोपणफलम्' तथा वृक्षभेदनदोषा दृष्टिगता भवन्ति। विष्णुपुराणे वृक्षविद्या उद्भिद्विद्याया नाम्ना उक्ता। पुराणेषु वृक्षारोपणसम्बन्धिविस्तृतं ज्ञानं प्राप्यते। विष्णुधर्मोत्तरमहापुराणे वृक्षाणाम् आरोपणात् पूर्वं भूसज्जाकरणस्य विधिं ब्रुवन्तम् उक्तं यत् वृक्षाणाम् आरोपणात् पूर्वं भूमौ तिलान् उप्त्वा, तेषां पुष्पिते सति मृत्तिकायां मेलनेन भूमिः रोपणकार्यस्य योग्या भवति।

**वापयेत्प्राक्तिलांस्तत्र मृन्दीयात्तांश्च पुष्पितान्।**
**ततस्तु रोपयेद् वृक्षान् प्रयतः सुसमाहितः॥[3]**

पादपानां रोपणं कियति दूरे कुर्याद् अस्मिन् विषये अग्निपुराणस्य मतमस्ति यत् वृक्षाणां परस्परम् अन्तरं विंशतिर्हस्तस्य उत्तमं मन्यते, षोडशहस्तस्य अन्तरं मध्यममस्ति द्वादशहस्तस्य अन्तरञ्च अधममस्ति।[4] वृक्षाणामारोपणमतिनिकटे न कुर्यात्। वृक्षान् अतिनिकटे वपनेन फलानि न सञ्जायन्ते। यदि वृक्षद्वयानां शाखाः परस्परं स्पर्शं कुर्युः तर्हि ताः शस्त्रेण छिन्द्युः।

---

*शोधच्छात्रः, ज्योतिषविभागः श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली

1. महापुराणानां कालः १०० ई. पूर्वतः ३००ईशापर्यन्तं वर्तते (गीतारहस्य. पृ.५६६)
2. उपपुराणानां कालः ५०० ईशातः १००० ईशापर्यन्तं वर्तते।
   (R.C.Hazra-Puranic Records on Hindu Rights and customs (1940)] P.160 ff)
3. विष्णुधर्मोत्तरपुराणे, द्वितीयखण्डे, वृक्षायुर्वेदाध्याये, श्लोक-३,४
4. अग्निपुराणम्, अ.२८२, श्लोकसं.-८

**उत्तमा विंशतिर्हस्ता मध्यमाः षोडशान्तराः।**
**स्थानात्स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम्।।**[1]

विष्णुधर्मोत्तरपुराणेऽपि पादपानां मध्ये एवमेव अन्तरं स्वीकृतमुक्तञ्च यत् न्यूनान्तराले सति वृक्षा नैकट्यकारणात् परस्परं स्पर्शं कुर्वन्ति, तेषां भूमिगतमूलानां मेलनं भवति। अस्माद् हेतोः वृक्षाः फलरहितास्तिष्ठन्ति।[2] अग्निपुराणस्यानुसारेण ग्रीष्मर्तौ वृक्षेभ्यः वृद्धिः सञ्जायते। वायविडङ्गेन, तण्डुलेन मत्स्यस्य मांसेन च वृक्षाणां रोगाः दूरं संगच्छन्ति।

**सायं प्रातस्तु घर्मर्तौ शीतकाले दिनान्तरे।**
**वर्षारात्रौ भुवः शोषे सेक्तव्याः रोपिता द्रुमाः।।**[3]

विष्णुधर्मोत्तरपुराणेऽपि एष एव भावो प्राप्यते।[4] पुराणेषु वृक्षाणां व्याधीनामुपचारोऽपि लभ्यते। अग्निपुराणस्य कथनमस्ति यद् यस्य वृक्षस्य फलम् उत्पन्नं भूत्वा पतति, अथवा यस्मिन् फलं विनश्यति, तस्य वृक्षस्य मूले कुलत्थस्य, माषस्य, मुद्गस्य, तिलस्य, यवस्य च चूर्णयुक्तेन जलेन सिञ्चने सति सस्सदा पुष्पफलान्वितो भविष्यति।[5]

एवमेव मेषस्य अजायाश्च शकृतस्य चूर्णम्, यवचूर्णं तिलस्य च चूर्णं सम्मील्य सेचनेन वृक्षः फलसमन्वितो भवति। सप्तरात्रिपर्यन्तं जले गोमांसं स्थापयेत् तथा अनेन वृक्षं सेचनेन सर्वे वृक्षाः फलपुष्पान्वितास्तिष्ठन्ति।[6] मत्स्यस्य जलेन सेचने सति वृक्षाणां वृद्धिः सञ्जायते। वायविडङ्गेन, तण्डुलेन मत्स्यस्य मांसेन च वृक्षाणां रोगाः दूरं संगच्छन्ति।

**मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनः।**
**विडङ्गतण्डुलोपेतं मत्स्यं मासं हि दोहदम्।।**[7]

अग्निपुराणानुसारेण सर्वप्रकाराणां वृक्षाणां रोगानाम् उपशमनं कर्तुं शक्यन्ते। किंशुकस्य पुष्पाणि सुन्दराणि सुगन्धितानि च कर्तुं शक्यन्ते। वृक्षस्य व्याधेरपसारणं कृत्वा वृक्षान् दीर्घायुः, सरसेन श्रेष्ठेन च फलेनोपेतं कर्तुं शक्यन्ते। द्रुमव्याधेः द्रुमरोगमर्दनस्य च विषयाः विष्णुधर्मोत्तरपुराणे विस्तरेण उपवर्णितास्सन्ति। पादपेषु कस्यचित् प्रकारस्य व्याधौ सति सर्वप्रथमं व्याधियुक्तभागं केनचित् शस्त्रेण छिन्द्यात्। ततः बिडङ्गघृतपङ्कयुक्तशीतलजलेन तस्य सेचनं कुर्यात्।[8]

वृक्षाणां फलनाशे सति कुलुत्थं, माषं, मुद्गं, तिलं यवञ्च मिलित्वा सेचनेन ते सर्वदा फलपुष्पान्विता भवन्ति।[9] विष्णुधर्मोत्तरपुराणे वृक्षाणां दोहदविषये सूचना प्राप्यते।

1. अग्निपुराणम्, अ.२८२, श्लोकसं.-९
2. विष्णुधर्मोत्तरपुराणम्, द्वितीयखण्डम्, वृक्षायुर्वेदाध्यायः, श्लोकसं.-१५
3. अग्निपुराणम्, अ.२८२, श्लोकसं.-७
4. विष्णुधर्मोत्तरपुराणम्, द्वितीयखण्डम्, वृक्षायुर्वेदाध्यायः, श्लोकसं.-१४
5. अग्निपुराणम्, अ.२८२, श्लोकसं.-१०
6. अग्निपुराणम्, अ.२८२, श्लोकसं.-११
7. अग्निपुराणम्, अ.२८२, श्लोकसं.-१३
8. विष्णुधर्मोत्तरपुराणम्, द्वितीयखण्डम्, वृक्षायुर्वेदाध्यायः, श्लोकसं.-१७,१८
9. विष्णुधर्मोत्तरपुराणम्, द्वितीयखण्डम्, वृक्षायुर्वेदाध्यायः, श्लोकसं.-१९

**ततः प्रधानतो वक्ष्ये द्रुमाणां दोहदान्यहम्।**[1]

आम्रस्य वृक्षं मत्स्यीयशीतलजलेन सेचनं लाभदायकं भवति। बकुलस्य वृक्षाणां कृते तुषस्य तुषारस्य वा जलमुत्तमं भवति। शृगालमांसस्य जलं नारङ्गस्य अक्षोटस्य च वृक्षाणां सेचनस्य कृते उत्तमं भवति। मुलेठीयुक्तजलं, बदरीफलस्य शाखा, गन्धकस्य जलं, गोमांसञ्च केतकवृक्षस्य कृते प्रशस्ता मन्यन्ते। सप्तपर्णीवृक्षं दुग्धेन सेचने सति मनोहरं प्रतीयते। कुरबकवृक्षस्य कृते मांसस्य, अस्थेः, वसायाः, मज्जायाश्च जलेन उपसेचनं गुणकारी भवति।

**क्षीरसेकेन भवति सप्तपर्णो मनोहरः।**
**मांसपूतो वसा मज्जासेकः कुरबके हितः।।**[2]

एवमेव मलिनजलं , मत्स्यघृतप्रयोगः कार्पासस्य कृते, मांसेन वृष्टिजलेन वा पाटलस्य वृक्षस्सेक्तव्यः। कपित्थस्य बिल्वस्य च वृक्षान् गुडमिश्रितजलेन मालत्याश्च गन्धकमिश्रितजलेन सेचनं लाभदायकं भवति। इतोऽपि कुब्जकं मालतीञ्च कूर्मस्य मांसं देयम्। खर्जूरं नारिकेलं वंशीं एवं कदलीं लवणमिश्रितजलेन सेचने ते झटिति वर्धन्ते। विडङ्गेन सह तण्डुलस्य मत्स्यमांसस्य च प्रयोगः सर्वेषां वृक्षाणां कृते उत्तमो भवति। एवं किंशुकस्य सुन्दरपुष्पाणां सुगन्धिं दत्वा द्रुमव्याधीनां निराकरणं कर्तुं शक्यते तथा वृक्षान् चिरायुः एवं सरफलेभ्यः समन्विताः कर्तुं शक्यन्ते।

**कपित्थ-बिल्वयोः सेकं गुडतोयेन कारयेत्।**
**जातीनां मल्लीकायाश्च गन्धतोयं परं हितम्।।**[3]

विष्णुधर्मोत्तरपुराणे निम्नलिखितवृक्षाणां रोपणकार्यं प्रशस्तं मन्यते- अरिष्ठावृक्षम्, अशोकम्, पुनागवृक्षम्, शिरीषम्, आम्रम्, प्रियङ्गुम्, पनसम्, कदलीम्, जम्बूम्, लकुचम्, दाडिमम्, एते उद्याने गृहस्य अङ्गणे वा रोपणीयाः। एतेषां वृक्षाणां रोपणकार्यात् परम् अन्ये वृक्षा अपि रोपितुं शक्यन्ते, किन्तु बहेडस्य, शालमल्याः, कोविदारस्य वृक्षान् विहाय असनस्य, देवदारस्य, किंशुकस्य पाटलस्य च रोपणकार्यं वर्जितमस्ति।[4] वृक्षाः परहितं कुर्वन्ति। शीतकालेन, झञ्झावातेन, ग्रीष्मकालेन उत्पन्नान् नैकान् कष्टान् सहमाना वृक्षाः पत्रपुष्पफलयुक्तशाखाभिः सर्वदा छायां प्रदाय परहिते तपः कुर्वन्ति।

**पत्र-पुष्प-फलैर्नित्यं छायया चैव शाखिनः।**
**परेषामुपयुज्यन्ते तद्धि तेषां महत्तपः।।**[5]

अतः पुराणेषु वृक्षारोपणस्य विशेषं महत्त्वमस्ति। विष्णुधर्मोत्तरमहापुराणस्य 'वृक्षारोपणफलनिरूपणम्' इति नामके सप्तनवत्यधिकद्विशततमे (२९७) अध्याये

1. विष्णुधर्मोत्तरपुराणम्, द्वितीयखण्डम्, वृक्षायुर्वेदाध्यायः, श्लोकसं.-२३
2. विष्णुधर्मोत्तरपुराणम्, द्वितीयखण्डम्, वृक्षायुर्वेदाध्यायः, श्लोकसं.-२५,२६,२८
3. विष्णुधर्मोत्तरपुराणम्, द्वितीयखण्डम्, वृक्षायुर्वेदाध्यायः, श्लोकसं.-२९-३३
4. विष्णुधर्मोत्तरपुराणम्, द्वितीयखण्डम्, वृक्षायुर्वेदाध्यायः, श्लोकसं.-१०-१३
5. विष्णुधर्मोत्तरपुराणम्, तृतीयखण्डम्, २९७अध्यायः, श्लोकसं.-२०

वृक्षारोपणफलस्य विशदं निरूपणमस्ति। वृक्षाणां रोपणेन मनुष्यान् अत्यधिकं फलं प्राप्यते। पुष्पीयवृक्षाणां रोपणेन अग्निष्टोमयज्ञसदृशं फलं प्राप्यते।[1] वृक्षारोपणकर्तारं परलोके गमने सति तृप्तिः प्राप्यते। अनेन पुण्येन स्वर्गस्य प्राप्तिः भवति।[2] वृक्षा देवतुल्या मन्यन्ते। वृक्षदेवताः परलोकगमने सति वृक्षारोपणकर्तारं रक्षन्ति।

**यमलोकमुपासन्ते सर्वास्ता द्रुमदेवताः।**
**द्रुमरोपयितारं च परलोकमुपागतम्।।**[3]

वृक्षान् जलेन सेचनम् अत्यन्तं पुण्यकार्यमस्ति। अन्यव्यक्तिद्वारा आरोपिते वृक्षेऽपि जलप्रदानेन महत्फलस्य प्राप्तिः भवति।[4] ब्रह्माण्डपुराणेऽपि वृक्षारोपणस्य महत्त्वं प्रतिपादितम्। पुराणान्तरेष्वपि वृक्षारोपणस्य महत्त्वे नैकाः श्लोकाः प्राप्यन्ते। वृक्षाः सन्तत्याऽपि अधिकाश्श्रेष्ठा मन्यन्ते। मत्स्यपुराणस्य मते वृक्षस्य एकस्य रोपणं दशपुत्रसदृशमस्ति।

**दशकूपसमा वापी दशवापी समो ह्रदः।**
**दशह्रदसमः पुत्रो दशपुत्रसमो द्रुमः।।**[5]

शिव-स्कन्द-कालिका-पद्म-विष्णुधर्मोत्तरेत्यादिषु पुराणेष्वपि वृक्षाः पुत्रसदृशाः इति अवधारणा विद्यते। पद्मपुराणस्य कथनमस्ति यत् वृक्षाः पुत्रविहीनस्य कृते पुत्रतुल्या भवन्ति।[6] वृक्षाः स्वपत्रपुष्पफलच्छायामूलवल्कलकाष्ठादिभिश्च सर्वेषामुपकारं कुर्वन्ति।[7] वृक्षारोपणस्य महत्त्वं दर्शयन् वराहपुराणे उक्तमस्ति यत् उत्तमः पुत्रः कुलं रक्षति तथैव फलपुष्पान्वितो वृक्ष एक स्वामीं नरकगमनात् त्रायते। येन नरेण आम्रस्य पञ्चवृक्षाणां आरोपणं क्रियते, तेन नरकः न गम्यते।[8]

वृक्षारोपणेन तदेव फलं प्राप्नोति यद् भूदानेन गोदानेन वा प्राप्यते।[9] विष्णुधर्मोत्तरपुराणस्यापि एतदेव कथनमस्ति यत् एकेन नरेण आरोपितो वर्धितश्च वृक्षः तदेव कार्यं करोति यदेकेन पुत्रेण क्रियते। सो वृक्षः स्वपुष्पैः देवान् प्रसीदते, छायाभिः यातृः, स्वफलैः मनुष्यान् प्रसीदते। वृक्षारोपणकर्तारं कदापि नरको न प्राप्यते।

**एकोऽपि रोपितो वृक्षः पुत्रकार्यकरो भवेत्।**
**देवान्प्रसूनैः प्रीणाति छायया चातिथींस्तथा।।**[10]

---

1. विष्णुधर्मोत्तरपुराणम्, तृतीयखण्डम्, २९७अध्यायः, श्लोकसं.-१-३
2. विष्णुधर्मोत्तरपुराणम्, तृतीयखण्डम्, २९७अध्यायः, श्लोकसं.-१६
3. विष्णुधर्मोत्तरपुराणम्, तृतीयखण्डम्, २९७अध्यायः, श्लोकसं.-२५
4. विष्णुधर्मोत्तरपुराणम्, तृतीयखण्डम्, २९७अध्यायः, श्लोकसं.-१७
5. मत्स्यपुराणम्, १५४ अध्यायः, श्लोकसं.-१२
6. अपुत्रस्य च पुत्रत्वं पादपा इह कुर्वते।
7. वराहपुराणम्, १७२ अध्यायः, श्लोकसं.-४०
8. वराहपुराणम्, १७२ अध्यायः, श्लोकसं.-३६-३७
9. वराहपुराणम् तत्रैव
10. विष्णुधर्मोत्तरपुराणम्, तृतीयखण्डम्, २९७ अध्यायः, श्लोकसं-१३

एवं पुराणेषु वृक्षसमारोपणस्य अन्तर्गतः वृक्षारोपणयोग्यभूमेः सज्जीकरणस्य विधिः, पादपेषु अन्तरम्, वृक्षसेचनम्, वृक्षव्याधिमर्दनम्, वृक्षदोहदम्, ऊर्वरकादेः विस्तृतं ज्ञानं प्राप्यते। पुष्पिततिलान् पेष्ट्वा मृत्तिकायां मेलनेन भूमिरधिका उर्वरा भवति। कुलत्थमाषमुद्गतिलयवयुक्तैश्च शीतलजलेन पादपानाम् उपसेचनं लाभदायकं भवति। अजामेषयोः शकृत् भूमेः उर्वरतां वर्धते। गोमांसमत्स्यवायविडङ्गतण्डुलतुषार श्रृगालमांसमूलेठीगन्धकदुग्धमांसास्थि-वसामज्जागुडकूर्ममांसलवणादिमिश्रितेन वारिणा सेचने सति विविधवृक्षाः त्वरध्वेन विवर्धन्ते तेषां वृक्षाणां व्याधीनामुपशमनञ्च भवति। वृक्षाः परहितं कुर्वन्ति। अतः तेषां समारोपणस्य विशिष्टं महत्त्वमस्ति। पुराणेषु वृक्षारोपणफलस्य निरूपणं कृतमस्ति। वृक्षा देवतुल्या उक्तास्सन्ति। वृक्षाः सन्ततेरपि अधिकश्रेष्ठाः मताः।

**वृक्षायुर्विज्ञानस्य वैशिष्ट्यम्-**

वृक्षसंरक्षणं भारतीयमनीषायाः तदद्भुतं योगदानमस्ति यत्र केवलं वृक्षान् प्रति प्रीतेः पूजायाश्च भावम् अभिव्यञ्जयति अपितु आधुनिकज्ञानविज्ञानसमक्षम् एकाम् आदर्शानुसन्धानदृष्टिं प्रदर्शयति। अद्यतनस्य जीवविज्ञानं वृक्षपादपेषु यस्य श्वसन-जनन-परिवर्तन-परिवर्धन-मुकुलन-नवीकरण-पोषण-रोगनिराकरणादेः वार्तां करोति, एते सर्वे विषयाः वृक्षायुर्विज्ञाने सारतः सन्निहिताः सन्ति।

प्राचीनाचार्यैः तरुलक्षण-भूमिनिरूपण-पादपविवक्षा-बीजोत्पत्ति-रोपण-निषेचन-उपवनीकरण- अभिषिञ्चन-पोषण-व्याधिनिवारणादीनां ये विधय अन्वेषिताः तास्वेव अद्यतनस्य वनस्पतिशास्त्रस्य भव्यभवनं स्थितमस्ति एवं प्रतीयते। वृक्षा निरापदाः (आपद्विहीनाः) स्वस्थाश्च भवेयुः, अस्य मुख्यमुद्देश्यमेतदेवास्ति यद् यदि ते स्वयं स्वस्था भविष्यन्ति तदैव अस्माकं वनस्पति-आधारितजीवनमपि निरोगं कर्तुं शक्यन्ते, अस्माकं कृते स्वच्छवायोः संवाहका भविष्यन्ति, निर्मलजलदायका भविष्यन्ति पुष्टपञ्चाङ्गं दत्त्वा अस्माकं जीवनस्य कृते पोषणं प्रदास्यन्ति।

********

UGC - CARE Listed
अक्टूबर–दिसम्बर, 2019

शोधप्रभा
वर्ष : 44, चतुर्थोऽङ्कः

# प्राच्यपाश्चात्यमतयोरयनांशस्वरूपम्

श्रीअरुणशर्मा*

ज्योतिषशास्त्रं दिवि देदीप्यमानानां दिविसदां नक्षत्राणाञ्च गतिं स्थितिञ्च अस्मान् बोधयति। सर्वेऽपि ग्रहाः स्वस्वविमण्डलेषु भ्रमन्तः स्फुटार्थं क्रान्तिवृत्तम् आरोप्यन्तेऽर्थात् ग्रहबिम्बोपरिगतं कदम्बप्रोतवृत्तं क्रान्तिवृत्ते यत्र स्पृशत्युत सम्पातं करोति तत्स्थानं राश्यादिको स्पष्टो ग्रहः। तद्वदेव कदा ग्रहः राश्यन्तरं विशतीति विज्ञातुं कालज्ञानं नाडीवृत्ते क्रियते । एवं क्षेत्रवृत्तं कालवृत्तञ्चापराभिधानमेतयोः वृत्तयोः। सम्पाच्चलनत्वादेव अयनांशाः जायन्ते।

आदौ तावदयनस्यांशाः अयनांशाः इत्युच्यन्ते। अय् गतौ धातोः भावे ल्युट् प्रत्यये सत्ययनमिति सिद्धयति गमनमित्यर्थमभिधत्ते। अयनस्य चलनमित्यर्थः। अयनस्यांशा एव अयनांशाः। सूर्यस्योत्तरस्यां दक्षिणस्यां वा दिशि गमनमेवोत्तरायणं दक्षिणायनं वा उच्यतेऽर्थात् यस्मिन् कस्मिन्नपि दिवसे सूर्यः पूर्वस्यां दिशि यस्मिन् बिन्दावुदेति तस्मात् बिन्दोरग्रिमेऽह्नि यदोत्तरस्यामुदेतिदोत्तरायणं यदा याम्यां तदा दक्षिणायनमिति। यस्मिन् बिन्दौ स्थिते रवावयनपरिवर्तनं जायते तस्य नाम अयनसन्धिः। अयनसन्धेर्नवत्यंशमिते दूरे गोलसन्धिर्यत्र नाडीक्रान्तिवृत्तयोः सम्पातः। यदा सायनसूर्यो मकरराशिं प्रविशति तदा उत्तरायणस्यारम्भो जायते । सूर्यस्य यस्मिन् बिन्दावुदयस्तस्मादुत्तरस्यामग्रिमेषु षड्मासेषु तस्योदयो भविष्यतीत्यर्थः। यदा सायनसूर्यः कर्काटकराशिं विशति तदा याम्यायनारम्भः। मकरकर्कटयोः याम्यसौम्यायनत्वात् उत्तरायणबिन्दुतः नवत्यंशान्तराग्रे वसन्तसम्पातः , दक्षिणायनबिन्दुतोऽग्रे शरत्सम्पातश्च। यस्मिन् बिन्दौ स्थिते रवौ अयनपरिवर्तनं जायते नायं स्थिरः। अस्य चलनं सम्पातबिन्दोश्चलनत्वात् सम्भवति। अतोऽस्य चलनमेव अयनचलनम्। सृष्ट्यादौ यत्र सम्पातः आसीत् ततः यावद्भिरंशैः सम्पातोऽन्तरितः तावदयनांशाः। अयनसन्धेः गमनं चक्रात्मकम् अपरस्याम् , दोलात्मकम् उभयतोऽपि इति पक्षद्वयं प्राप्यते। न क्षरतीति नक्षत्रमित्यनुसारमश्विनीनक्षत्रारम्भो यतस्तत एव मेषराश्यारम्भः इत्येकः पक्षः । अपरे तु नाडीक्रान्तिवृत्तयोः सम्पाताद् मेषादिराश्यारम्भः। तस्मादेव राशिचक्रं द्विधा निरयणराशिचक्रं (sidereal zodiac) सायनराशिचक्रं (tropic zodiac) विभाज्यते । एतयोरेव नामान्तरं स्थिरराशिचक्रं चलराशिचक्रञ्च ।

सम्पातस्य भिन्नभिन्ननक्षत्रेषु स्थितिरासीदिति वाङ्मयावलोकनात् ज्ञायते। यथा

---

*शोधच्छात्रः, ज्योतिषविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली–16

शतपथब्राह्मणे - **तस्मात्कृत्तिकास्वादधीत । एताह वै प्राच्यैदिशो न च्यवन्ते।**[1] सायनमेषस्थितिः कृत्तिकानक्षत्रासन्नमेव इति ज्ञायते। वेदाङ्गज्योतिषे आचार्यलग्धेन प्रोक्तम् - **"प्रपद्येते श्रविष्ठादौ सूर्यचन्द्रमसावुदक्। सार्पार्धे दक्षिणार्कस्तु माघश्रावणयोः सदा"**[2] अनेन श्रविष्ठानक्षत्रादौ सौम्यायनं सार्पाधे च याम्यायनं जायते। मिहिरेणापि बृहत्संहितायां विषयोऽयमुपस्थापित आदित्यचाराध्याये -

**आश्लेषार्द्धाद्दक्षिणमुत्तरमयनं रवेर्धनिष्ठाद्यम् ।**
**नूनं कदाचिदासीत् येनोक्तं पूर्वशास्त्रेषु।**
**साम्प्रतमयनं सवितुः कर्कटकाद्यं मृगादितश्चान्यत् ।**
**उक्तभाव विकृतिः प्रत्यक्षपरीक्षणैर्व्यक्तिः।।**[3]

अनेन ज्ञायते यत् मिहिरसमयेऽयनपरिवर्तनमुत्तरायणमुत्तराषाढानक्षत्रस्य द्वितीयचरणात् तथा याम्यायनं पुनर्वसुनक्षत्रस्य तृतीयचरणात् भवति स्म। एभिः प्रमाणवाक्यैः सम्पातो न स्थिररिति सुस्पष्टं ज्ञायते । सम्पातस्य भ्रमणविषये ज्योतिषप्रपञ्चे यानि प्रमाणानि प्राप्यन्ते तानि एवं वक्तुं शक्नुमः -

ज्यौतिषशास्त्रेऽयनांशविषये पूर्वसूरीणाम्मतं द्विधा दृश्यते। केचन सम्पातस्य चक्रात्मकं भ्रमणामङ्गीकुर्वन्त्यपरे च दोलात्मकं भ्रमणम् । आधुनिकाः पाश्चात्या अपि सम्पातस्य चक्रात्मकमेव भ्रमणमङ्गीकुर्वन्ति।

वस्तुतः प्रचलितसूर्यसिद्धान्ते , पञ्चसिद्धान्तिकादिग्रन्थेषु सम्पातस्य दोलात्मकं भ्रमणं प्रतिपादितं वर्तते। नाडीक्रान्तिवृत्तयोः यः सम्पातः तद्बिन्दुः दोलात्मकं भ्रमति। यथोक्तं सूर्यसिद्धान्ते -

**त्रिंशत्कृत्यो युगे भानां चक्रप्राक् परिलम्बते।**
**तद्‌गुणाद् भूदिनैर्भक्ताद् द्युगणाद्यदवाप्यते।।**
**तद्दोस्त्रिघ्ना दशाप्तांशाः विज्ञेया अयनाभिधाः ।**
**तत्संस्कृताद् ग्रहात् क्रान्तिच्छायाचरदलादिकम्।।**[4]

चतुर्युगात्मक एकस्मिन्महायुगे नक्षत्राणां मण्डलं त्रिंशत्कृतयः (३०×२०=६००) अर्थात् षट्शतसङ्ख्यातुल्यं स्वस्थानात् पूर्वतश्चलितं भवति। अस्यार्थो विषुवत्क्रान्तिमण्डलयोर्यः सम्पातो निरयणमेषादौ सृष्ट्यादावासीत् सः सम्पातः पूर्वस्यां दिशि सप्तविंशतिलवान् गत्वा, ततः पश्चिमायां सप्तविंशतिभागान् भुक्त्वा पुनर्स्तमेव निरयणमेषबिन्दुं समागत्य ततो भभागान् प्रतीच्यामित्वा पुनः परावृतो नक्षत्रभागान् भुक्त्वा स्वस्थानमर्थात् निरयणमेषस्थानमागच्छति तावानेको भगणः। एकस्मिन् महायुगे एतादृशाः षट्शतभगणाः भवन्ति। अभीष्टाह्ययनांशानयनक्रममाह यद् तैर्युगीयायनांशभगणैः गुणादहर्गणात्

1. शतपथब्राह्मणम् - २/१/२
2. या.ज्यो. श्लोक ७
3. बृहत्संहिता आदित्यचाराध्याय श्लोक १-२
4. सूर्यसिद्धान्तः त्रिप्रश्नाधिकारः ९/१०

युगीयसावनदिनैर्भक्ताद् यद् भगणादिफलमायाति तस्य भुजः साध्यः। भुजसाधनक्रमस्तु **"लिप्तास्तत्त्वयमैर्भक्ता लब्धं ज्यापिण्डकं गत"**[1] मित्यादिना स्पष्टाधिकारे न्यरूपि । प्रोक्तप्रकारेण साधितो भुजस्त्रिभिर्गुणितो दशभिर्भाजितश्चेत् लब्धाः अयनांशाः भवन्ति ।

एकस्मिन् क्रान्तिपातभगणे पातोऽष्टोत्तरशतं (१०८°)लवाः भ्रमति । अत एकस्मिन् महायुगे तदंशाः १०८×६००=६४८०००। एतेषामंशानां कलासु विभागः ६४८००×६०= ३८८८००० कलाः। एकस्मिन् महायुगे ४३२०००० सौरवर्षाणि भवन्ति । अतः एकस्मिन् महायुगे ४३२०००० सौरवर्षैः पातस्य गतिः ३८८८००० कलात्मिका चेत् एकस्मिन् वर्षे का? इत्यनुपाते कृते ३८८८०००/४३२०००० =००'-५४'' सम्पातस्य वार्षिका गतिर्भवति। सूर्यसिद्धान्तवत् पञ्चसिद्धान्तिकायां रोमकादिष्वप्ययनांशस्य चलने मतमिदमेवाङ्गीकृतम्। यथा -

**द्युगणः षट्शतघ्नोऽर्क शुद्धोदयहतो ग्रहः।।**[2]
**युगे षट्शतकृत्वो हि भचक्रं प्राग्विलम्बते।।**[3]
**इत्येतदेतत् प्राक्चलनं युगे तानि च षट्शतम्।।**[4]

सम्पातस्य चक्रात्मकं भ्रमणमप्याचार्या अङ्गीकुर्वन्ति। तेषां मते सम्पातोऽश्विनीनक्षत्रानन्तरं रेवत्यादिनक्षत्रभोगविपरीतक्रमेण कुर्वन् पुनरश्विन्यादौ समायाति। तावानेको भगणः ३६०° अंशात्मको भवति। कल्पेऽस्य भगणसङ्ख्या भिन्नाचार्याणां मते भिन्ना भिन्ना वर्तते। तत्रादौ आचार्यो विष्णुचन्द्रो यो वराहब्रह्मगुप्तयोर्मध्यकालीनस्तेन क्रान्तिपातस्य भगणाः कल्पे १८९४११ प्रोक्ताः।[5] अनेन कल्पे अयनविकलाः १८९४११×३६००×६०'×६०''= २४५४७६६५६०००'' सन्ति। अतः वार्षिकायनगतिः २४५४७६६५६०००/४३२०००००० = ५६.८२३३'' समायाति । प्राचीनाचार्येण मुञ्जालेन स्वग्रन्थे लघुमानसे अयनभगणाः गोरसरसगोऽङ्कचन्द्रमिताः (१९९६६९) प्रतिपादिताः।[6] एवं सत्येते भगणाः यदि कल्पे विकलासु परिणाम्यन्ते तदा १९९६६९×३६००×६०'×६०''=२५८७७१०२४०००''। अर्थात् एकस्मिन् कल्पे पातः २५८७७१०२४००० विकलाः भ्रमति तर्हि एकस्मिन् वर्षे किम्? इत्यनेन २५८७७१०२४०००/४३२०००००००=५९.९००७ विकलात्मिका वार्षिका गतिः। आचार्यभास्करोऽपि शिरोमणावस्यैव मतं स्वीकरोति । आचार्यसामन्तचन्द्रशेखरोऽप्येकस्मिन् कल्पे प्रतिलोमगत्या ६४०१७० पर्यायान् क्रान्तिपातस्य प्रतिपादयति।

आधुनिका अपि भुवः पञ्चधा गतिमामनन्ति। तत्र प्रथमा स्वाक्षभ्रमणम्।

1. सूर्यसिद्धान्तः स्प. श्लोक २९
2. पञ्चसिद्धान्तिकायां रोमकसिद्धान्ते - ३१
3. सोमसिद्धान्ते - स्प.अ. - ३१
4. शाकल्यब्रह्मसिद्धान्तः अ.२ - १९६
5. ब्रह्मस्फुटसिद्धान्त टीकायाम् अध्यायः - ११ , श्लो.-५४
6. लघुमानसकरणम्

द्वितीया तरणिं परितः भ्रमणम्। तृतीया अक्षस्य विपरीतदिशि भ्रमणम्। चतुर्थी दुग्ध सागराभिप्रायिकभ्रमणम्। पञ्चमी सूर्यपरिवाराभिप्रायिकभ्रमणम्। अत्र प्रथमा तु भुवः २३-५६- ४.०९ होरात्मके काले अक्षोपरि भ्रमणम्। द्वितीया रविं परितः ३६५.२५ दिनेषु भ्रमणम्। चतुर्थीपञ्चम्योः वर्णनमिह नावश्यकम्। अस्माकं प्रतिपाद्यो विषयस्तावत् तृतीया गतिः। रविचन्द्रयोराकर्षणवशात् भूभ्रमणस्य विपरीतदिशि भुवोऽक्षस्य गतिर्भवति। एषैवायनगतिः भुवः ध्रुवप्रदेशस्य (नाडीवृत्तस्य पृष्ठकेन्द्रस्य) क्रान्तिवृत्तपृष्ठकेन्द्रं कदम्बं परितः विपरीतदिशि भ्रमणं जायते। तद्वशादेव तयोः सम्पातो गोलसन्धिरपि विपरीतस्यां दिशि भ्रमत्यस्यैव नामायनांशस्य भ्रमणं पातभ्रमणं वा वर्तते। चक्रात्मकं भ्रमणमेव आधुनिकैः स्वीकृतं वर्तते। विषुवद्बिन्दोरेकं भ्रमणं २५८०० वर्षैः जायते। अनेन एकस्मिन् वर्षे १२९६०००/२५८०० =५०.२'' विकलात्मिका गतिर्भवति। १७१७ वर्षैः विषुवद्बिन्दोः पुरस्सरणं २३० ५७' भवति । अस्यात्र त्रिधा गतिर्भवति। मन्दगतेः प्रारम्भः ततः समा गतिः ततः शीघ्रा च गतिर्जायते । एवं सर्वमपि १७१७ वर्षैः एकदा भवति । सम्पूर्ण चक्रभ्रमणं तावत् २५८०० वर्षैः भवति।

अत्र प्राच्यपाश्चात्यानुसारमयनांशाः प्रतिपादिताः सन्ति। तत्र प्राच्यवैदिकमते दोलात्मकं चक्रात्मकञ्च गमनं पातस्य प्रादर्शि। आधुनिका अपि कदम्बं परितः नाडीवृत्तपृष्ठकेन्द्रस्य ध्रुवस्य भ्रमणमङ्गीकुर्वन्ति यत् पूर्वप्रोक्तेन चक्रात्मकं भ्रमणेन साम्यतां भजते । अयनांशानां ज्योतिषशास्त्रस्य त्रिष्वपि स्कन्धेषु महदुपयोगो वर्तते । यतो गोलः सर्वदापि सायनस्तथा क्रान्त्यादिकमपि सायनग्रहस्यैव प्रत्यक्षत्वं भजते । किन्त्वदृष्टपुण्यकर्माणि निरयणेन ज्ञातव्यानि। वृष्ट्यादेर्ज्ञानन्तु सायनवशादेव तुल्यतां यास्यति। तस्मादयनांशानां महदुपयोगः ज्योतिषप्रपञ्चेऽस्तीति ज्ञायते।

********

UGC - CARE Listed
अक्टूबर-दिसम्बर, 2019

शोधप्रभा
वर्ष : 44, चतुर्थोऽङ्कः

# आचार्यविश्वनाथकृतध्वन्यालोकमतखण्डनस्य लोचनदिशामण्डनम्

श्रीरविकान्तो भारद्वाजः*

लोके सर्वत्र वयमनुभवामो यत् सत्काव्यं सचेतसां चेतो नूनमेव वेद्यान्तरसम्पर्कशून्यं लोकोत्तराह्लादमयं च प्रकुरूते। तथा चायमेवानन्दः प्रधानतमं प्रयोजनमपि काव्यस्येत्याहुराचार्याभिनवगुप्तपदाः "चतुर्वर्गव्युत्पत्तेरपि चानन्द एव पार्यन्तिकं मुख्यं फलम्"[1]।

अत्रेदं विचारणीयं वस्त्वस्ति यत्काव्यादसावानन्दः कथं प्रतीयते? अर्थात्किमभिधेयं तत्तत्त्वं यत्सत्वात्काव्यादस्य प्रतीतिर्जायते। तत्रास्यानन्दस्य कारणतावच्छेकभूततत्त्वप्रतीतये काव्यतत्त्वविद्भिराचार्यैर्भरत-भामह-आनन्दवर्धन-कुन्तक-क्षेमेन्द्रैः काव्यस्य पृथक् पृथक् षटतत्त्वानां निरूपणं कृतम्, येषां सत्वे हि महाकविप्रबन्धेषु तदानन्दः समधिगच्छति। तानि तत्त्वानि रसालङ्काररीतिध्वनिवक्रोक्त्यौचित्यानि प्रसिद्धानि।

प्रसिद्धेष्वेतेषु षट्सम्प्रदायेषु न कोऽपि ज्येष्ठो न च कनिष्ठः, यतोहि भरतादिभिराचार्यैः- तेष्वन्यतमस्य कस्याप्येकस्य काव्यजीवित्वमन्येषां च यथायथं तदुपयोगित्वं प्रमापितम्। यथा रसवादिनोऽलङ्काररीत्यादीनि तत्त्वानि रसोपकारकत्वेनाङ्गीकुर्वन्त्येव। तथैव ध्वनिवादिनोऽपि तदितरान् वक्रोक्त्यौचित्यादीन् यथायथं ध्वनिध्वनने साहायकमङ्गीकुर्वन्त्येव। यथोक्तं ध्वन्यालोके

**"सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते"[2]**

एवं च-

**"अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।"[3]**

इत्येवमन्येष्वपि सम्प्रदायानां प्रतिनिधिभूतग्रन्थेष्वेकस्य प्रकृतस्य प्राधान्यमन्येषां च तदुपकारित्वं स्वीकृतमस्ति। परन्तु परवर्तिभिराचार्यैराचार्यविश्वनाथप्रभृतिभिः स्वाभिलषितकाव्यस्वरूपं लिलक्षयिषितुं प्राक्तनाचार्याणां मतानि दूषितानि।

तत्र साहित्यदर्पणेऽऽचार्यविश्वनाथेन परेषामाचार्याणां काव्यलक्षणस्य खण्डनप्रसङ्गे श्रीमदानन्दवर्धनप्रतिष्ठापितो ध्वनिकाव्यात्मवादोऽपि खण्डितः। प्रस्तुतेऽस्मिन् शोधपत्रे मया यथाग्रन्थमाचार्यविश्वनाथेन ध्वनिसिद्धान्ते कृताक्षेपस्य लोचनदिशा यथामति समाधानः प्रतिपाद्यते। येन नवीनानां साहित्यपथानुयायिनां हृदये ध्वनिविषये विश्वनाथोत्थापितः संदेहो

---

*शोधच्छात्र, साहित्यविभागः, संस्कृतविद्याधर्मविज्ञानसंकायः, काशीहिन्दूविश्वविद्यालयः वाराणसी. (उ.प्र.)

1. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०41
2. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०499
3. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०0

ध्वंसताम्। आचार्यविश्वनाथः साहित्यदर्पणाख्ये ग्रन्थे प्रथमपरिच्छेदे काव्यलक्षणप्रसङ्गे ध्वनिवादे दोषद्वयं दर्शयामास। तत्र प्रथमो हि यदुक्तं तेन-''यत्तु ध्वनिकारेणोक्तम्'' काव्यस्यात्मा ध्वनिः'' इति वस्त्वलङ्काररसादिलक्षणस्त्रिरूपो ध्वनिः काव्यस्यात्मा उत रसादिरूपमात्रो वा? नाद्यः प्रहेलिकादावतिव्याप्तेः। द्वितीयश्चेदोमिति ब्रूमः।[1] इत्यत्राचार्यविश्वनाथोऽऽचार्यानन्दवर्धनस्वीकृते काव्यात्मलक्षणे वस्त्वलङ्कारध्वनिमादायातिव्याप्तिं प्रदर्शितवान्। तेनोक्तं प्रहेलिकादावपि वस्तुरूपध्वनेः सत्वादतिव्याप्तिर्भवति यतोहि न प्रहेलिकादिः काव्यम्, अतस्तत्रालक्ष्ये प्रहेलिकादौ लक्षणस्य ध्वनेर्गमनादतिव्याप्तिनामदोषः। यथा हि तल्लक्षणम्-''लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वम्'' इति यदुक्तं तन्न युक्तियुक्तम्, तत्कथमिति चेत? कथ्यते लक्षणस्य ध्वनेरलक्ष्ये प्रहेलिकादावनतिप्रसक्तत्वान्नातिव्याप्तिशङ्कोचिता। तत्र ध्वनेर्लक्षणं हि यथा निगदितं ध्वन्यालोके-

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।**[2] इति

अयं हि कारिकार्थः-स एव काव्यविशेषो न च काव्यसामान्यो ध्वनिः, यस्मिन् काव्यविशेषेऽर्थस्स्वात्मानमथवा शब्दस्स्वकीयवाच्यार्थं सर्वथैव गूणीभूतं कृत्वा तं प्रतीयमानार्थं व्यङ्क्तस्तदेव काव्यविशेषो ध्वनिपदवाच्यः।

प्रहेलिकायां तु प्रतीयमानस्य अर्थाद् व्यङ्ग्यस्य सत्वेऽपि, तत्र वाच्यस्यैव चमत्कारित्वात्तस्यैव प्राधान्यं भवति, अतो नेदं ध्वनिस्थलम्। ध्वनिस्तु तत्रैव भवति यत्र व्यङ्ग्यप्राधान्यम्। यथोक्तं ध्वनिकृता-'' व्यङ्ग्यप्राधान्ये हि ध्वनिः''[3] । प्रहेलिकायां यथा न व्यङ्ग्यप्राधान्यं तथा दर्शयति-

**तरुणयालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः।**
**गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः।।**[4]

इत्यत्र कश्चिद् विदग्धो मनोविनोदाय स्वमित्रं पृच्छति, सखे! किमभिधेयं तद्वस्तु यस्य कण्ठदेशस्तु कयाचित्कामिन्या आलिङ्गितः, तथा च तत्तस्याः नितम्बस्थलमाश्रयापि तिष्ठति, तथा च तत्तस्याः पित्र्यादीनामुपस्थितावपि पुनःपुनः शब्दं करोति। इत्यत्र वाच्यार्थ एव व्यङ्ग्यसाहाय्येन कुतूहलतया चमत्कृतिमुत्पादयति न तु व्यङ्ग्यम्। एवमत्र वाच्यस्य चमत्कारकारित्वात्तस्यैव प्राधान्यं न पुनर्व्यङ्ग्यस्य। अतो प्रहेलिकादयो न ध्वनिस्थलम्।

किञ्च यत्र यत्र व्यङ्ग्यत्वं तत्र तत्र ध्वनित्वमिति तन्मतं स्वीक्रियते चेत्, तदा व्यङ्ग्यप्रधानेष्वलङ्कारेष्वपि ध्वनित्वापत्तिस्स्यादित्येतन्न समीचीनं, यतोहि स्वयमेव ध्वनिकारेण प्रथमोद्योतेऽभाववादमतखण्डनावसरे व्यङ्ग्यस्य अप्राधान्याद् गुणीभूततोक्ता।

1. साहित्यदर्पणम्, शेषराजशर्मा, पृ०18
2. ध्वन्यालोकः, 1.13
3. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०108
4. साहित्यदर्पणम्, शेषराजशर्मा, पृ०19

यथोक्तं तत्र-

**व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः।**
**समासोक्त्यादयस्तत्र वाच्यालङ्कृतयः स्फुटाः।।[1]**
**व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा।**
**न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते।।[2]**
**तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रतिस्थितौ।**
**ध्वनेः स एव विषयः मन्तव्यः कटकादिवत्।।[3]''**

इत्यनेन स्पष्टमिदं कृतं यन्न सर्वत्र व्यङ्ग्यमात्रोपस्थितौ हि ध्वनिव्यवहरोऽस्त्वपितु, यत्र व्यङ्ग्यस्य सर्वथैव प्राधान्यं वरीवर्ति तत्रैव ध्वनिरिति। अतोऽत्राचार्यविश्वनाथेन यो हि दोषः प्रकटितस्तत्केवलं परकीयसिद्धान्ते येन केन प्रकारेण आक्षेपमात्रमेव।

अथेदानीमाचार्यविश्वनाथेन ध्वनिकारमते यो हि द्वितीयाक्षेपः कृतः स प्रतिपाद्यते। साहित्यदर्पणे तस्मिन्नेव काव्यलक्षणनिरूपणप्रसङ्गे विश्वनाथाचार्यः पुनः ध्वनिकारमते स्ववचनविरोधानामदोषं दर्शयति, तेन तत्रोच्यते-''यच्च ध्वनिकारेणोक्तम्,

**योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।**
**वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ।।**

अत्र वाच्यात्मत्वं ''काव्यस्यात्मा ध्वनिः'' इति स्ववचनविरोधादेवापास्तम्।''[4]

एतत्तु यत् साहित्यदर्पणकृद्व्याख्यानं तत् ध्वनितत्त्वानवबोधनिबन्धनम्। यतो ह्यत्र तेनाचार्येण या शङ्का समुत्थापिता तस्याः समुचितसमाधानं लोचने निगदितमभिनवगुप्तेन।

इदानीं यथा लोचनेऽस्याः शङ्कायाः समाधानं तदुच्यते। आचार्याभिनवगुप्तेन लोचने पञ्चस्वर्थेषु ध्वनिव्यवहारो दर्शितः, अर्थात् ध्वन्यालोके ध्वनिशब्दप्रयोगः पञ्चष्वर्थे ध्वनिकृता कृत इति निर्दिष्टः। ते च ध्वन्यर्थाः-शब्दः, अर्थः, व्यङ्ग्यार्थः, व्यंजनाव्यापारः, तथा तत्प्रतिपादकसमुदायरूपकाव्यं चेति। यथाह लोचने-''अर्थो वा शब्दो वा व्यापारो वा। अर्थोऽपि वाच्यो वा ध्वनतीति, शब्दोऽप्येवम्। व्यङ्ग्यो वा ध्वन्यत इति। व्यापारो वा शब्दार्थयोर्ध्वननमिति। कारिकया तु प्राधान्येन समुदाय एवं काव्यरूपो मुख्यतया ध्वनिरिति प्रतिपादितम्।''[5]

अन्यच्चोक्तम्-''पञ्चधापि ध्वनिशब्दार्थे येन यत्र यतो यस्य यस्मै इति बहुब्रीह्यार्थाश्रयेण यथोचितं समानाधिकरण्यं सुयोज्यम्।''[6]

एतेन कथनेनेदं विज्ञायते यत् पञ्चात्मकध्वनिस्तु व्यञ्जकस्तथा चैतैर्व्यक्तं प्रतीयमानं व्यङ्ग्यम्। अनयोरेव व्यङ्ग्यव्यञ्जकभावसम्बन्धः। शब्दस्य व्यञ्जकत्वं यथा इवे प्रतिकृतौ''

1. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०135
2. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०135
3. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०135
4. साहित्यदर्पणम्, शेषराजशर्मा, पृ०23
5. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०104.105
6. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०143

स्वयमेव प्रतिपादितमविवक्षितवाच्यध्वनौ लोचने-यद्यप्यविवक्षितवाच्ये शब्द एवं व्यञ्जकः''।[1] इति एवमप्यर्थस्यापि व्यञ्जकत्वं विवक्षितान्यपरवाच्यध्वनौ निगदितं तत्रैव-'' अत एवार्थोऽत्र व्यञ्जकः।[2] इति अनेनैव प्रकारेण ध्वन्यालोके ध्वनिशब्दप्रयोगः पञ्चस्वर्थेषु यत्र-तत्र ध्वनिकृता कृतः। अतो यदुक्तं ध्वन्यालोककारेण कारिकादौ-काव्यस्यात्मा ध्वनिः।[3] इत्यत्र तेन काव्यात्मतया तत्प्रतीयमानमेव कथितं, तथा च तद्व्यञ्जकोऽर्थ इति तदभिप्रायः। यथाहुः लोचने-''ध्वनिलक्षणोऽर्थः काव्यस्यात्मा।''[4]

ननु ध्वनिर्व्यञ्जक इति सिद्धान्तः केन प्रतिपादितः? इत्युक्तौ सति उच्यते, ध्वनिर्हि व्यञ्जः स्फोटश्च व्यङ्ग्य इति नयः वैयाकरणानां, त एव स्फोटध्वनिमध्ये व्यङ्ग्यव्यञ्जकभावसम्बन्धं स्वीकृतवन्तः। यथा हि लोचने वाक्यपदीयकारस्य भगवतो भर्तृहरेर्वचनम्-

**प्रत्ययैरनुपाख्येयैर्ग्रहणानुणैस्तथा।**
**ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते।।**[5]

इत्यत्र कारिकायां ध्वनेः प्रकाशकत्वं स्फोटरूपशब्दस्य च प्रकाश्यत्वं प्रतिपादितम्। तथा चैतस्मादेव व्यङ्ग्यव्यञ्जकभावसाम्याद् ध्वनिवादिनोऽपि प्रतीयमानरूपव्यङ्ग्यव्यञ्जने क्षमाणां शब्दार्थादीनां ध्वनिरिति व्यवहारः कृतः। यथाहुः ध्वन्यालोके-''प्रथमे हि विद्वांसो वैयाकरणाः व्याकरणमूलत्वात्सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति। ततस्तन्मतानुसारिभिरन्यैरपि सूरिभिः काव्यतत्त्वदर्शिभिर्वाच्यवाचकसम्मिश्रःशब्दात्मा काव्यमिति व्यपदेश्यः व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः।''[6]

एवं प्रकारेण स्थितमेतत् यो हि ध्वनिः काव्यात्मतया कथितः, तत्पुनः प्रतीयमानमेव ध्वनिस्तु तद्व्यञ्जकः। यच्च साहित्यदर्पणकृताभिहितं वाच्यस्य काव्यात्मत्वमुक्तं ध्वनिकारेण इति तदयुक्तम्।

ननु ध्वनिकृता प्रतीमानस्यैव काव्यत्वमङ्गीक्रियते चेत्तदा प्रकृतकारिकायां ''योऽर्थः सहृदय'' इत्यत्र कथं स्वमुखेनैव वाच्यस्यापि काव्यात्मत्वं निगदितं तेनेति चेदुच्यते- अस्याः कारिकायाः व्याख्यानावसरे लोचने स्पष्टतया प्रसङ्गोऽयं व्याख्यातः। तत्र लिखितं यद् ग्रन्थकारः काव्यात्मतत्त्वनिरूपणप्रसङ्गे कथं वाच्यस्य काव्यात्मतया निरूपणं कृतमिति जिज्ञासायाः अयं हि समाधानः प्रकृतकारिकातः पूर्वं प्रतिजानाति यदहं ग्रन्थस्यास्य यदभिधेयं ध्वनितत्त्वं तत्स्वरूपप्रकटनाय तस्य भूमिकां रचयितुं प्रवर्तयिष्ये। यथोक्तं ध्वन्यालोके-''तत्र ध्वनेरेव लक्षयितुमारब्धस्य भूमिका रचयितुरिदमुच्यते।''[7] इत्यस्मिन् वाक्ये भूमिकापदं चिन्तितम्, तत्रोक्तं यद् भूमिकाशब्दः तद् भूमिः इति पदेन

1. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०103
2. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०103
3. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०01.1, 4. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०10
5. वाक्यदीयम्, 1.83, 6. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०138
7. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०43

इति पाणिनिसूत्रेण कप्रत्यये कृते स्त्रीत्वविवक्षायां टाप् च कृते निष्पद्यते। तेनायमर्थो यथा भूमिस्तथैव भूमिका इति। अर्थाल्लोके हि यथा नवीनगृहारम्भाय भूमिरपेक्षते तद्वदेवात्र प्रतीयमानस्य प्रतिपादनेऽयं वाच्यार्थो भूमिरिव भूमिकारूप एव। अर्थाद् वाच्यार्थाद्विना न प्रतीयमानभवनं सम्भवति। यथोक्तं लोचने-''यथा अपूर्वनिर्माणे चिकीर्षिते पूर्वं भूमिर्विरच्यते, तथा ध्वनिस्वरूपप्रतीयमानाख्ये निरूपयित्वे निर्विवादसिद्धवाच्याभिधानं भूमिः।''[2]

कथनस्यास्य हि तात्पर्यो यद्वाच्योऽर्थो न काव्यात्मा, प्रत्युत प्रतीयमानस्य सिद्धौ स साधनभूत एव। अतो यद्वाच्यार्थः साधनभूतस्तत्कथं साध्यपदं प्राप्नुयात्, साध्यसाधनयोर्हि भिन्नस्वरूपवत्वात्। यथा चोक्तं ध्वन्यालोके वाच्यस्य साधनत्वम्-

**आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः।**
**तदुपायतया तद्वदर्थे वाच्ये तदादृतः।।**[3]

किं च यदि पुनराशङ्कते, यद्वाच्योऽप्यर्थस्तथा च प्रतीयमानमप्यर्थस्तत्रार्थवत्वसामान्येन द्वयोरप्यर्थयोः काव्यात्मत्वमुचितं न पुनरेकस्य कस्याप्यर्थस्येति चेत् न, यतो हि नार्थत्वमात्रेणैव काव्यत्मत्वं ह्यर्थानां, तत्स्वीकृते हि ये सन्ति लौकिकाः घटपटाद्यर्थास्तथा च ये वैदिकार्थास्तेष्वपि काव्यात्मत्वापत्तिः स्यात्। प्रत्युत तेष्वपि लौकिकवैदिकार्थेषु काव्यत्वमेव न प्रसज्येत् का कथा पुनस्तदात्मनः। यथाहुः-

**''योऽर्थःसहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः ।''**[4]

इति, तच्च सहृदयश्लाघ्योऽर्थः तत्प्रीयमानमेव यद्धि लावण्यमिवाङ्गनासु वर्तते, यच्चोक्तम्-

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।**[5]

इत्यनेन प्रकारेण प्रतीयमानमेव काव्यात्मरूपार्थ इति स्थितः। यथा हि लोचने-''अत एव अर्थ इत्येकतयोपक्रम्य सहृदयश्लाघ्य इति विशेषणद्वारा हेतुमभिधायापोद्धारदृशा तस्य द्वौ भेदावंशावित्युक्तम्, न तु द्वावप्यात्मानौ काव्यस्येति।''[6]

निष्कर्षः- ध्वनितत्त्वं हि सूक्ष्मतमं तत्त्वं विद्यते, यतो ह्यस्य ध्वनेर्प्रकाशनमलङ्कारादिस्थूलकाव्यतत्त्वानां पश्चाद् सूक्ष्मरूपेणाभवत्, यथा दर्शने चार्वाकादिस्थूलविचाराणां पश्चाद् द्वैतचिन्तनम्। यद्यपि अयमेव ध्वनिराचार्यविश्वनाथेनापि काव्ययोः वैविध्यं प्रदर्शनाय स्वीकृतस्तथापि केवलं स्वकीयकाव्यलक्षणं निरूपणायास्य ध्वनिवादस्य खण्डनं कृतम्। तस्याचार्यस्य मतं यथा नोचितं तथात्र शोधपत्रे मया लोचनदिशा प्रस्तुतम्।

---

1. अष्टाध्यायी, 5.3.96
2. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०43
3. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०19
4. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०1.2
5. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०1.4
6. ध्वन्यालोकः, जगन्नाथपाठकः, पृ०44

UGC - CARE Listed
अक्टूबर-दिसम्बर, 2019

शोधप्रभा
वर्ष : 44, चतुर्थोऽङ्कः

# वैदिक एवं बौद्ध कालीन स्त्री-शिक्षा की प्रासंगिकता

प्रो. रमेश प्रसाद पाठक*

**शिक्षा-** वैदिक काल में बालकों के समान कन्याएँ भी शिक्षा ग्रहण करती थीं। इस क्षेत्र में पुरुषों के समान स्त्रियों को भी शिक्षा का अधिकार प्राप्त था। उनका विधिवत् उपनयन संस्कार होता था तथा वे भी ब्रह्मचर्य व्रत का पालन करती थीं। वे अधिकतर अपने गृहों में ही शिक्षा प्राप्त करती थीं।[1] वैदिक साहित्य के अध्ययन से ज्ञात होता है कि प्राचीन समय में स्त्रियों की शिक्षा सम्बन्धी व्यवस्था उन्नत थी। सम्मानित तथा योग्य अध्ययन के लिए वैदिक साहित्य तथा यज्ञ के लिए लगभग 200 ई०पू० तक प्रवेश कर गयी थीं। इसमें कोई आश्चर्य की बात नहीं है कि ऋग्वेद की कुछ ऋचायें जो वैदिक स्त्रियों के द्वारा निर्मित हैं।, उनके भी साक्ष्य मौजूद हैं। कट्टरपंथी परम्परा वाले लोगों का मानना है कि वेदों की रचना केवल पुरुषों द्वारा की गयी लेकिन विश्ववारा, निवावारी, घोषा, रोमसा, लोपामुद्रा अपाला और उर्वशी आदि महिलाओं के योगदान के उल्लेख प्राप्त हैं।

स्त्री और पुरुष विशेष दीक्षा संस्कार में बराबर हिस्सा लेते थे। ''या दम्पति सुमनसा सुनुता च धावता:। देवासो नित्ययाशिरा।'' मौर्यकाल के अन्त में गृहिणियाँ पुरुषों से अपेक्षा करती थीं कि पुरुष सायंकाल एवं कुछ समय सुबह के गृहकार्य में व्यतीत करें।

अग्रह्याना संस्कार के स्रस्तारोहण पद्धति में स्त्रियाँ अत्यधिक संख्या में व्याख्या का कार्य करती थीं कृषि सम्बन्धी कार्य भी औरतें अकेले ही करती थीं। क्योंकि इस प्रकार उनकी आदत सी बन गयी थी। रामायण में भी उल्लेख है कि माता कौशल्या अकेले ही स्वयं प्रातः काल से उठकर अपने पुत्र को युवराज के रूप में प्रदर्शित करने के लिए समर्पित रहती थीं। ऐसा ही त्याग बानरराज बालि की पत्नी तारा के बारे में भी प्राप्त है। यह बहुत ही रोचक है कि इनकी पत्नियों की अभिव्यक्ति का वर्णन महाकाव्य के मन्त्रविद् में मिलता है जिसका वैदिक साहित्य में महत्त्वपूर्ण स्थान है। राम की पत्नी सीता प्रतिदिन वेदों का पाठ करती थीं। रावण की कैद में भी सीता वैदिक मन्त्रों के द्वारा प्रार्थना करती थीं। महाभारत में पाण्डवों की माता कुन्ती भी वेदों

---

*शिक्षा संकाय, श्री लाल बहादुर शास्त्री राष्ट्रीय संस्कृत विद्यापीठ नई दिल्ली-110016

1. डॉ. अल्तेकर.................प्राचीन भारत में शिक्षा

का पाठ करती थीं। वे अथर्ववेद के मन्त्रों पर विशेष रूप से आधारित थीं। इस प्रकार वेदों के अध्ययन एवं व्याख्यान में उनका योगदान रहता था।

स्त्री हो या पुरुष दोनों का वैदिक अध्ययन आरम्भ करने से पहले उपनयन संस्कार आवश्यक था। स्त्रियों के उपनयन संस्कार के पर्याप्त उल्लेख मिलते हैं। उनका उपनयन भी पुरुषों की भाँति होता था और वे भी ब्रह्मचर्य व्रत का दृढ़ता से पालन करती थीं। 'ब्रह्मचर्येण कन्या युवावम् विन्दति पतिम्'' अथर्ववेद में कुंवारी कन्याओं को यह निर्देश था कि वे ब्रह्मचर्य का पालन करें। बाद में इसका विस्तृत प्रचार-प्रसार किया गया।

**विवाह के स्वरूप-**

वैदिक काल में बाल-विवाह का प्रचलन नहीं था। नियमानुसार सभी वर्गों में कन्याओं का विवाह अनिवार्य था। अधिकतर विवाह 16 या 17 वर्ष की अवस्था में होते थे। केवल कुछ स्त्रियाँ ही इस उम्र के बाद शिक्षा ग्रहण करती थीं। इस प्रकार स्त्रियों के लिए दो प्रकार के अध्ययन का उल्लेख मिलता है। पहली शादी के बाद जिसे 'सदयोवैदस' और दूसरा विवाह के पूर्व जिसे 'ब्रह्मवैदिनी' कहा जाता था। सदयोवैदस की शिक्षा में महत्त्वपूर्ण वैदिक स्तोत्रों को प्रार्थना एवं यज्ञों के अध्ययन के लिए आवश्यक रूप से पाठ कराया जाता था। कुछ स्त्रियों का वैदिक साहित्य की तरफ और कुछ का संगीत और नृत्य की शिक्षा की तरफ झुकाव था। ब्रह्मवादिनी शिक्षा समाप्त होने के बाद ही विवाह करती थीं। ऋषि कुसध्वज की पुत्री वेदावती ने विवाह नहीं किया और अपना सम्पूर्ण जीवन वेदों के अध्ययन-अध्यापन में व्यतीत किया।'

**स्त्री शिक्षा की विशेषताएँ-**

प्राचीन काल की शिक्षा व्यवस्था बहुत ही सुदृढ़ थी। किसी भी जाति की स्त्री शिक्षा ग्रहण कर सकती थी। यह व्यवस्था उस काल की एक महत्त्वपूर्ण व्यवस्था थी। वैदिक काल में स्त्री और पुरुष के प्रति कोई भेदभाव नहीं था जिन स्त्रियों का विवाह लम्बे समय तक नहीं होता था वे स्वभावतः दूरद्रष्टा होती थीं। वैदिक काल में स्त्रियाँ वैदिक साहित्य की पूर्ण ज्ञाता थीं तथा प्रायः काव्य की रचना भी करती थीं, तथा कुछ अपने कार्यों, रचनाओं और व्याख्याओं आदि के कारण सम्मानित होती थीं। कथा और भवीची सम्प्रदाय की स्त्रियों को काथी और भावीची कहा जाता था। काथी वृन्दिका कथा सम्प्रदाय की महत्त्वपूर्ण स्त्री छात्रा थी, जिन्होंने अपनी प्रतिभा को अपने समय की अन्य महिलाओं में अधिक श्रेष्ठता के साथ सिद्ध किया था। कुछ महिलाओं ने वैदिक शाखा के विकास और प्रगति को अपने काव्यों और रचनाओं के माध्यम से दर्शाया है। जब वैदिक ज्ञान और यज्ञ जटिल था तब एक नयी शाखा 'मीमांसा' का जन्म हुआ यह विषय गणित से भी नीरस था। फिर भी स्त्री छात्राओं ने इसमें विशेष रुचि दिखाई। वे अत्यधिक रुचि के साथ मीमांसा का अध्ययन करती थीं। ''एवमपि

काशकृत्सिना प्रोक्ता मीमांसा काशकृत्स्नी काशकृत्स्नामधिते काशकृत्स्ना ब्राह्मणी।'' काशकृत्सिना ने एक मीमांसा ग्रन्थ की रचना भी की। इसके बाद जिन स्त्रियों ने इसमें विशेषज्ञता अर्जित की उन्हें काशकृत्सिना के नाम से जाना जाता था।[1] स्त्रियाँ तकनीकी विज्ञान में भी मीमांसा की तरह विशेष योग्यता प्राप्त करती थीं और नए कीर्तिमान स्थापित करती थीं। वे समाज में सम्मानित होती थीं। उपनिषद् काल में जब दर्शनशास्त्र का अध्ययन सार्वजनिक हुआ तब स्त्रियों ने भी इस विषय में अत्यधिक रुचि दिखाई और इस विषय में ज्ञान अर्जित करने के लिए उत्सुकता प्रदर्शित की। साहोवाच मैत्रेयी पिनायं नामृतास्याम् किं तेनाहं कुर्यामिति''। याज्ञवल्क्य की पत्नी मैत्रेयी भी दर्शनशास्त्र में रुचि रखती थीं। वे महंगे वस्त्र एवं आभूषण पहनने की अपेक्षा अध्ययन में अधि क रुचि रखती थीं। राजा जनक ने अपने संरक्षण में दर्शनशास्त्र की प्रतियोगिता का आयोजन किया एवं यज्ञादि विधियों के साथ सम्पन्न कराया। इस आयोजन में सबसे रोचक प्रश्न चतुर दार्शनिक स्त्री गार्गी वाचकण्वी ने पूछा था। उसने अपनी वाक्पटुता से याज्ञवल्क्य को चमत्कृत कर दिया। उत्तररामचरितम् की दूसरी महिला का नाम आत्रेयी था। जिन्होंने वाल्मीकि और अगस्त्य से वेदों का अध्ययन किया था। इस युग की कुछ अन्य स्त्री छात्राएँ जैसे- सुलभा, वाडवा, प्रथितेपी, मैत्रेयी और गार्गी ने ज्ञान के विकास में काफी योगदान दिया।

**स्त्रियों के शिक्षा प्राप्त करने की विधि-**

प्राचीन काल से ही परिवार मुख्य रूप से शिक्षा संस्था के रूप में कार्य करता रहा है। 'पिता पितृत्यौ भ्राता वा नैनामध्यायपयेत् पर:' अर्थात् बालक एवं बालिकाएँ अपने पिता, चाचा, या घर के बड़े बुजुर्गों के अनुभव द्वारा शिक्षा प्राप्त करती थीं। स्मृति में यह बताया गया कि बालिकाओं को नजदीकी रिश्तेदारों को ही शिक्षित करना चाहिए। जब अधिकांश महिलाएँ उच्च शिक्षा ग्रहण कर रही थीं। और ज्ञान के विकास में अपना महत्त्वपूर्ण योगदान दे रही थीं, यह माना स्वाभाविक है कि उनमें से कुछ महिलाएँ अध्यापन पेशे को चुनती थीं। ''उपेत्याधीयते अस्या: सा उपाध्याया'' अर्थात् वे उपाध्याया या उपाध्यायिनी के नाम से जानी जाती थीं।[2] अध्यापक की स्त्री को विनम्र शीर्षक दिया जाता था चाहे वो शिक्षित हो अथवा नहीं। अध्यापक स्त्रियाँ गृहिणी स्त्रियों से भिन्न थी। तथा उनका कद भी समाज में ऊँचा था। इस सम्बन्ध में हमें यह ध्यान देना चाहिए कि 12 वीं शताब्दी में हिन्दू समाज में पुरोधा संस्कार नहीं था और इस प्रकार स्त्रियों को शिक्षा ग्रहण करने में कठिनाई नहीं थीं। पाणिनी ने स्त्री शिक्षा के लिए छात्रावास, क्षत्रीशला और मुख्य रूप से स्त्री शिक्षिका या उपाध्याया के अधीक्षण के लिए सहमति दी थी, जिनका पेशा अध्यापन था। दुर्भाग्यवश कोई स्पष्ट

---

1. एवमपि काशकृत्सिना प्रोक्ता मीमांसा काशकृत्स्नी। काशत्स्नामधिते काशकृत्स्नां ब्राह्मणी ii on iv, 1, 14 : 3, 155
2. उपेत्याधीयते अस्या: सा उपाध्याया 1 Patanzali on iii-822

एवं प्रर्याप्त साक्ष्य स्त्री शिक्षिका और प्रबन्ध के बारे में प्राप्त नहीं है।

**वैदिक काल में सह शिक्षा-**

आधुनिक समाज इस बात को जानने के लिए चिन्तित है कि प्राचीन काल में सह शिक्षा का प्रारम्भ हुआ था या नहीं। आठवीं शताब्दी में भवभूति द्वारालिखित मालती माधव में लिखा है कि कामान्दकी ने भूरीवसु के साथ प्रसिद्ध शिक्षा केन्द्र देवराता में शिक्षा ग्रहण किया था। कसिका के द्वारा निर्देशित छात्र ऐसे स्कूलों में प्रवेश लेते थे जिनका प्रश्नसूचक उद्देश्य होता था। उत्तररामचरितम् में आत्रेयी के लव और कुश के साथ शिक्षा ग्रहण करने का उल्लेख मिलता है। कहोदा, सुजाता, रूरूद्वारा और परमद्वारा की कहानियाँ पुराणों में मिलती हैं, जो सह शिक्षा को दर्शाती हैं। इन कहानियों में यह बताया गया है कि कुछ लड़कियाँ बाल्यकाल में ही विवाह हो जाने पर भी शिक्षा ग्रहण करती थीं। प्राचीन काल में जब स्त्रियाँ शिक्षा देने के लिए उपलब्ध नहीं होती थीं, उस समय गुरु अपने पाल्य को शिक्षक के पास भेजते थे। उस समय प्रेम विवाह असामान्य नहीं था।[1] उस समय सह शिक्षा से माता-पिता भयभीत नहीं थे। प्राचीन काल में सह शिक्षा का सही-सही प्रतिशत बताना सम्भव नहीं है।

आर्य समाज के अनुयायी वैदिक और साहित्यिक शिक्षा पर कुछ निश्चित धनराशि अवश्य खर्च करते थे। इस प्रकार हम कह सकते हैं कि लम्बे समय तक लड़कियों का उपनयन संस्कार होता रहा और बाल-विवाह समाज में जड़ नहीं पकड़ पाया। अच्छे और संस्कारित परिवार की लड़कियाँ अपनी शिक्षा अच्छी प्रकार पूरी करती थीं।

समाज में एक तरह की भ्रान्ति व्याप्त थी कि जो स्त्रियाँ शादी के बाद शिक्षा देने का कार्य करती थीं वे जल्दी ही विधवा हो जाती थीं।

**वैदिक साहित्य एवं शिक्षा में स्त्रियों का योगदान-**

वैदिक साहित्य के अध्ययन से ज्ञात होता है कि प्राचीन समय में स्त्रियों की शिक्षा व्यवस्था उन्नत थी। बहुत सी स्त्रियों ने वैदिक ऋचाओं की रचना भी की थी। जैसे अत्रिकुल की विश्वारा ने ऋग्वेद के 5 से 28 सूक्तों की रचना की है। अपाला ने ऋग्वेद की 8 से 91 सूक्तों की रचना की। घोषा की सिवती ने ऋग्वेद की 10-39 सूक्तों की रचना की। ऋग्वेद में 21 ऋषिओं का उल्लेख है। उनके द्वारा रचित मन्त्रों की संख्या सैकड़ों में है। ये मन्त्र अधिकांश दशम् मण्डल में हैं। इन ऋषिकाओं के नाम हैं-बृदधा कामायनी, शची, पौलकी, सार्पराज्ञी यमीववस्ती, देवसामय इन्द्राणि शश्वती, अंगिरसी, रोमशा, ब्रह्मवादिनी, गौधा, ऋषिका, उर्वशी, सूर्या, सावित्री, अदिति, दाक्षायायी, लोपामुद्रा, अपाला, नदी ऋषिका, घोषा, काक्षावती, विश्ववारा आत्रेयी, वाक् आम्भृणी, जुहू ब्रह्मजाजा, सरमात्रऋषिका, यमी इत्यादि।

1. सुखत्वादेव बहुक्लेशादपि चारणदिह। अनुरागात्मकत्वाच्च गान्धर्व प्रवेशमतः। गन्धर्वमत्येकेप्रशंसात् सर्वेषाम् स्नेहीनुगत्वात्।। कामसूत्र 111-5,30

बृहदारण्यक उपनिषद् में दो विदुषी स्त्रियों का उल्लेख है।[1] जिनमें याज्ञवल्क्य की पत्नी मैत्रेयी ने ब्रह्मविषयक प्रश्न किये। दूसरी विदुषी गार्गी वाचकष्णी ने याज्ञवल्क्य से शास्त्रार्थ किया है। उनके प्रश्नों से वे विचलित हो गये थे। आश्वलायन गृह्मसूत्र से ज्ञात होता है कि इस काल में स्त्री शिक्षिकाएँ भी होती थीं। उन्होंने तीन शिक्षिकाओं का उल्लेख किया है जिनमें हैं–गार्गी वाचकण्वी, बड़वा प्रातिधैयी एवं सुलभा मैत्रेयी।[2] पाणिनि के समय में भी स्त्रियाँ अध्यापन कार्य करती थीं। अध्यापन कार्य करने वाली स्त्रियों को उपाध्याय और आचार्या नाम से सम्बोधित किया जाता था।[3]

गोभिल गृह्यसूत्र और काठक गृह्यसूत्र से ज्ञात होता है कि बहुएँ पढ़ी लिखी होती थीं और मन्त्रों का उच्चारण भी करती थीं।[4] ज्ञात होता है कि सूत्र काल में भी स्त्रियाँ वेद मन्त्रों का पाठ करती थीं।[5] स्मृति काल में स्त्री की दशा अधोगति की ओर अग्रसर हुई। स्त्रियों को शूद्रों की श्रेणी में रखा गया। इसके साथ ही उन्हें वेद आदि के अध्ययन से दूर रखा गया। मनु और गौतम आदि ऋषियों ने स्त्री को परतंत्र माना है।[6]

मनु ने स्त्रियों के संस्कार मंत्रहीन कहे हैं। केवल विवाह संस्कार में मंत्रों का पाठ बताया गया है।[7] इसके विपरीत बृहद्धारीत और मनुस्मृति में स्त्रियों और शूद्रों के उपनयन और वेदाध्ययन की व्यवस्था दी गयी है। बृहद्धारीत का कथन है कि जो भी सदाचार सुशील आदि गुणों से युक्त हैं वे सभी ब्राह्मण, क्षत्रिय, वैश्य, शूद्र और स्त्रियाँ मंत्रों के पाठ के अधिकारी हैं। भृगु जी का कथन है कि बालक और बालिकाओं का भी उपनयन संस्कार पाँच वर्ष की अवस्था में होना चाहिए और उन्हें वेदाध्ययन करना चाहिए। पाँच वर्ष में कन्याओं को गुरुकूल में भेज देना चाहिए। स्वच्छता और आचार से हीन तथा निकृष्ट कार्य करने वाली स्त्रियाँ और पुरुष वेद पढ़ने के अधिकारी नहीं भुगु ने स्पष्ट रूप से उल्लेख किया है बिना अध्ययन के स्त्री और शूद्रों को भी ज्ञान प्राप्त नहीं हो सकता है। ज्ञान के अभाव में मुक्ति असंभव है। अतः स्त्री और शूद्रों को भी मुक्ति के लिए ज्ञान की पूरी व्यवस्था होनी चाहिए। स्त्रियों को शिक्षा सामान्य परिवार एवं राज परिवारों में भी दी जाती थी। कुछ स्त्रियों को सैनिक शिक्षा भी दी जाती थी। राजकुमारियों की दासियों को भी सैनिक शिक्षा दी जाती थी। जिससे वे युद्ध के समय उनकी मदत कर सकें। राजकुमारियाँ युद्ध में अपने पिता के साथ जाती थीं और अपने कौशल का परिचय देती थीं। सन् 200 ई०पूर्व से 1200 ए०डी० तक स्त्रियों की शिक्षा का स्वर्णकाल था।

---

1. बृहस्पति स्मृति उपनिषद् -2-4-,1 3-6-8
2. आश्वलायन-3-4
3. इनद वरूण अष्टाध्यायी-4-1-49 की व्याख्या
4. काठक 9-3, गोभिल-स्मृति 2-1, 19-20
5. 1. कामसूत्र-1, 2, 1-3
6. मनुस्मृति 9-3, गौतमस्मृति 18-1
7. मनुस्मृति 2-66 - 67

यह निश्चित तौर पर देखने को मिलता है कि प्रत्येक आर्य पुत्रियों के लिए एक निश्चित धनराशि उनकी उच्च शिक्षा पर खर्च की जाती थी। मनु-स्मृति में कहा गया कि लड़कियों का उपनयन बिना वैदिक मंत्रों के उच्चारण से होना चाहिए। परन्तु कुछ समय बाद ही दूसरे संस्करण में यह व्यवस्था दी गयी कि लड़कियों का विवाह संस्कार वास्तव में लड़कों के उपनयन संस्कार को परिलक्षित करता है। इस प्रकार यह स्पष्ट कर देना उचित होगा कि लड़कियों का उपनयन संस्कार ईस्वी सन् के प्रारम्भ में केवल एक औपचारिकता थी। यामा के अनुसार एक समय में लड़कियों को उपनयन और वैदिक शिक्षा पाने का विशेषाधिकार प्राप्त था। उपनयन संस्कार का निरन्तर न होना स्त्रियों की धार्मिक दशा के पतन का द्योतक था। स्त्रियों ने यह घोषणा की ''वदन्ति केचन्मुनयः स्त्रीणां शूद्रसमानताम्'' अर्थात् उनकी स्थिति शूद्रों की भांति है जो यज्ञ तथा वैदिक मंत्रों के उच्चारण के लिए बहिष्कृत हैं। कुछ स्त्री संघ जो पतियों के साथ औपचारिक तथ्यों पर त्याग करते थे इसके विपरीत कुछ सैद्धान्तिक लोग जैसे अतिसयाना ने इस सहभागिता का जमकर विरोध किया।

**सामान्य परिवार में स्त्री शिक्षा-**

संस्कारित परिवार के स्त्री छात्राओं की उपलब्धि ऊँची थी, और सामान्य परिवार की स्त्रियों से अच्छी थी। सुसंस्कृत परिवार समाज में बहुत कम था तथा वे ही अपने लड़कियों के लिए विशेष अध्यापकों की व्यवस्था कर सकते थे। सामान्य परिवार अच्छी तरह से स्थापित नहीं था। तथा यह सन्देहजनक है कि लगभग 6वीं या सातवीं ईसा पूर्व तक औसतन महिलाएँ शिक्षा नहीं ग्रहण कर पाती थीं। नारद स्मृति के टिप्पणीकर्ता जो आठवीं शताब्दी में थे, ने कहा- ''शास्त्राध्यनावधिका- रित्वात् शास्त्रमात्रोपजीविधर्मधर्मज्ञानभावात् अस्वातंत्र्यम्''स्त्रियों की स्वतन्त्रता नामक पुस्तक में उन्होंने कहा कि स्त्रियों की बृद्धिलब्धि पुरुषों की अपेक्षा उचित शिक्षा के अभाव में काफी अविकसित थी। यह बताना कठिन होगा कि 12वीं शताब्दी ई०पूर्व तक समाज में स्त्रियों की साक्षरता का प्रतिशत 5 से अधिक नहीं होगा। पुरुषों की साक्षरता का प्रतिशत लगभग 30 होगा।

**राजकुमारियों एवं कुलीन परिवार में बलिकाओं की शिक्षा-**

प्राचीन भारतीय इतिहास में स्त्रीधन पर आश्रित विधवा स्त्री तथा राजकुमारियों के बारे में बताया गया कि वे अपने राज्य, प्रशासन में कुशलतापूर्वक हिस्सा लेती थीं। आन्ध्रकुल की नयनिका और वाकाटक कुल की प्रभावती गुप्त ने अपने पुत्रों के बाल्यकाल में अपने साम्राज्य पर कुशलता से शासन किया।

मसागा की रानी ने अपने पति की मृत्यु के पाश्चात् अलेक्जेण्डर महान से अपनी राजधानी की रक्षा की। बहुत सी काश्मीर की रानियों ने लड़ाई के मैदान में युद्ध

1. राजतरंगिणी Vii 905, 0909, 931 : Viii, 1137.9

किया। उनमें से कुछ जैसे सुगन्धा और दिद्दा ने शासक रानी के रूप में राज्य किया।[1] चालुक्य कुल में मैलादेवी, आकादेवी, कुंकुश देवी और लक्ष्मी देवी जैसी कुछ स्त्रियों एवं नारियों ने शहर एवं जनपदों के प्रशासक के रूप में शासन किया। शाही परिवार की स्त्रियाँ आपात काल में में उचित प्रतिक्षण देती थीं और सामान्य समय में अपने पतियों को सहयोग देने में महत्त्वपूर्ण भूमिका अदा करती थीं। प्रतिक्षण दो तरह के थे- प्राशासनिक और सैनिक। प्राशासनिक प्रशिक्षण उन लोगों को दिये जाते थे जो उम्र में वृद्ध हो चुके थे तथा जो शासन करने योग्य थे तथा उसके विपरीत युवाओं को सैनिक प्रशिक्षण दिये जाते थे। वे पूर्ण रूप से हथियार चलाने, घोड़े की सवारी तथा तैराकी में माहिर होते थे। रानी विजयम्हादेवी के पुत्र गंगादत्त कहे जाते थे क्योंकि उनकी मां गंगा जी में तैरने जाया करती थीं तथा उनकी इच्छा थी कि उन्हें गर्भ रहे। सामान्यतया क्षत्रिय परिवारों में सैनिक प्रशिक्षण स्त्रियों द्वारा दिये जाते थे। गाँव की स्त्रियाँ आबरू तथा अपने घर की रक्षा प्रायः स्वयं ही करती थीं।

**नारी की स्थिति एवं मान्यता-**

पूर्व वैदिक समाज से लेकर आधुनिक समाज तक के सभ्यता परिवर्तन के साथ ही नारी की स्थिति में भी परिवर्तन होते रहे हैं। सामाजिक परिवर्तन पुरुषों की अपेक्षा नारी समुदाय को अधिक प्रभावित करते रहे हैं। नारी की शारीरिक कोमलता के कारण समाज ने उन्हें सदैव नियन्त्रण में रखने का प्रयत्न किया है सामाजिक परिवर्तनों के साथ-साथ स्त्रियों के प्रति निर्मित सामाजिक नियन्त्रण के विधान में भी परिवर्तन अवश्यंभावी होने के परिणाम स्वरूप विभिन्न कालों में नारी की सामाजिक स्थिति के भिन्न-भिन्न रूप पाए गए हैं। पूर्व वैदिक काल में नारी की स्थिति अत्यंत सुदृढ़ थी। रामायण एवं महाभारत काल में भी स्त्रियाँ सर्वथा पूजनीय होती थीं। महाभारत काल में तो पुरुषों के समान ही नारियों के भी अधिकार थे। वैदिक काल पुत्र एवं पुत्रियों के लिए संस्कार समान रूप से सम्पन्न होते थे। धर्मसूत्रों में नामकरण एक संस्कार के रूप में माना गया है। आश्वलायन गृह्यसूत्र के अनुसार कन्याओं को भी बालकों के समान विद्याध्ययन का अधिकार था। उनका भी उपनयन संस्कार इत्यादि किया जाता था। विष्णुस्मृति में भी कन्याओं के लिए उपनयन संस्कार का प्रावधान था।[1] वैदिक समाज में स्त्रियों को आदर की दृष्टि से देखा जाता था।

वैदिक काल में नारी की स्थिति अन्य कालों की अपेक्षा अधिक सम्मानित थी। वैदिक काल की समाप्ति के बाद बौद्धकाल में स्त्रियों की स्थिति पतन की ओर गयी लेकिन बौद्धकाल में ही भगवान् बुद्ध की एक प्रिय शिष्या के प्रयास से पुनः स्त्री की शिक्षा को प्रारम्भ किया गया एवं बौद्ध विहारों में स्त्रियों को प्रवेश दिये जाने लगा। स्त्री शिक्षा एवं विविध कौशल वैदिक काल में नारी शिक्षा का पार्याप्त प्रचार-प्रसार था।

1. विष्णुस्मृति 22/32

उन्हें वैदिक मन्त्रों का अध्ययन करने का अधिकार प्राप्त था। कन्याएँ काव्य, संगीत, नृत्य अभिनय आदि ललित कलाओं में दक्षता प्राप्त करती थीं। हारीत संहिता के अनुसार स्त्रियाँ दो प्रकार की होती थीं।

प्रथम वह जो यज्ञाग्नि प्रज्वलित करने विद्याध्ययन करने और अपने ही घरों से भिक्षा माँगने की अधिकारिणी थीं और दूसरी वह जो विवाह करती थीं। इनमें से कुछ उच्च शिक्षा प्राप्त कर आजन्म ब्रह्मचारिणी रहकर आध्यात्मिक उन्नति में लगी रहती थीं। ऐसी स्त्रियाँ वेदाध्ययन तथा रचना करती थीं और त्याग तपस्या के द्वारा ऋषि भाव प्राप्त करके ग्रन्थों का साक्षात्कार भी कर लेती थीं। ऋग्वेद के अनेक सूक्तों का साक्षात्कार स्त्रियों द्वारा किया जाता था।[2] वैदिक काल में स्त्रियाँ प्रायः नृत्य संगीत का प्रशिक्षण प्राप्त करती थीं। प्राचीन वैदिक काल में शिक्षा का स्तर अधिक ऊँचा था। धर्मशास्त्री साहित्य में भी स्त्री शिक्षा का विस्तृत विवरण प्राप्त होता था।

पतंजलि ने महाभाष्य में कई स्थानों पर कन्याओं तथा स्त्रियों के पढ़ने पढ़ाने का उल्लेख किया है। गृह्यसूत्र स्मृतियों के अनुसार कन्याएँ नृत्य संगीत, बुनाई आदि घरेलु कार्यो की शिक्षा ग्रहण करती थीं। काठव गृह्यसूत्र में संगीत प्रशिक्षण लेने का उल्लेख है।

मनु के अनुसार स्त्रियों को विद्यालयों के अतिरिक्त घरेलु शिक्षाएँ मिलनी चाहिए जिससे वे पति की अनुपस्थिति में उन कौशलों जैसे- सीना, पिरोना, सूत कातना आदि के द्वारा जीविका चला सकें।

वात्स्यायन के अनुसार स्त्रियों को चौसठ कलाओं में पारंगत होना आवश्यक माना गया है। वात्स्यायन के अनुसार इन कलाओं से युक्त कन्याएँ अपने पति को वश में करती हैं तथा पति से वियुक्त हो जाने पर इन कलाओं के द्वारा अपना जीवन निर्वाह भी कर सकती हैं। रामायण काल में स्त्रियाँ अध्ययन, अध्यापन में विशेष रुचि रखती थीं। क्षत्रिय कन्याएं धन, विद्या तथा राजकर्म की शिक्षा ग्रहण करती थीं।

स्त्रियाँ विवाह से पूर्व ही वैदिक कर्म-काण्डों की शिक्षा ग्रहण करती थीं। वाल्मीकि ने कौशल्या को हवन करते हुये तथा सीता को सन्ध्योपासन करते हुए चित्रित किया है।

रामायण कालीन कन्याएँ- वेद, वेदांग, पुराण, इतिहास और धार्मिक वाद-विवाद में दक्ष थीं। सीता ज्ञान की अनेक शाखाओं की ज्ञाता एवं पौराणिक ज्ञान में निपुण थीं। संगीत, नृत्य, चित्रकारी आदि कलाओं से कन्याएँ अभिभूत थीं। नैतिक शिक्षा भी उन्हें दी जाती थीं।[1]

महाभारत कालीन कन्याएँ प्रायः घर पर ही शिक्षा ग्रहण करती थीं। कन्या के लिए शिक्षक की नियुक्ति का केवल एक उदाहरण प्राप्त होता है। उत्तरा को नृत्य, संगीत, वादन आदि की शिक्षा देने के लिए राजा विराट ने वृहन्नला की नियुक्ति की थी।[2] कन्या

1. वाल्मीकि रामायण 5, 10, 37, 49
2. महाभारत विराट पर्व 10, 8-10

को अपेक्षित शिक्षा माता से प्राप्त होती थी। विवाह के पश्चात् वधू को अपनी सास तथा अन्य स्त्रियों से शिक्षा मिलती थी। कुन्ती, गान्धारी, देवकी ने अपनी पुत्रवधुओं को धर्म के उपदेश दिए थे। विवाहित स्त्रियों कि लिए श्रेष्ठ गुरु पति ही था। महाभारत कालीन स्त्रियों के लिए श्रेष्ठ गुरु पति ही था। महाभारतकालीन स्त्रियाँ वेदोच्चारण करने का अधि कार रखती थीं। दुष्यन्त की सभा में शकुन्तला का वेदोक्त कथन तथा आधेवती का वेदोक्त विधि से अतिथि सत्कार करना इस तथ्य को प्रमाणित करते हैं।

महाभारत काल में स्त्रियाँ मन्त्र और प्रार्थनाएँ कंठस्थ किए रहती थीं। राज परिवार की स्त्रियों के लिए नीति शास्त्र की शिक्षा अनिवार्य थी। गान्धारी, द्रौपदी, कुन्ती, सुभद्रा, दमयन्ती विदुरा, सत्यवती आदि ने राजनैतिक जीवन पर प्रकाश डाला था। महाभारत में नारियों द्वारा ग्रन्थों के पठन, लेखन एवं गणित, गणना के उल्लेख नहीं प्राप्त हैं फिर भी कन्याओं को विभिन्न कलाओं की शिक्षा प्रधान रूप से दी जाती थी।

पाक विज्ञान, घर की स्वच्छता शय्यासन तथा अन्य उपकरणों की देख-रेख, धन-धान्य की रक्षा, उद्यान तथा पालतू पशु-पक्षियों की व्यवस्था, शिष्टाचार का पालन, रोगियों की सुश्रुषा आदि का प्रतिक्षण कन्यायें घर में प्राप्त करती थीं। नृत्य के अतिरिक्त वृक्ष सिंचन, पर्यटन आदि अभिरुचियां महाभारतकालीन कन्याओं में बहुलता से पायी थी। निम्न श्रेणी के कुटुम्ब की कन्यायें अपने पिता के व्यवसाय में सहायता करती थीं। जैसे- सत्यवती नौका चलाने में अपने पिता की सहायता करती थीं।[1]

काव्यमीमांसा से ज्ञात होता है कि अभिजात्य वर्ग की नारियाँ काव्य, संगीत, नृत्य, वाद्य और चित्रकला में प्रवीण थीं।[2] भोजप्रबन्ध और प्रबन्धचिन्तामणि में अनेक शास्त्र का अध्ययन करने वाली कवयित्री सीता का विवरण मिलता है।[3]

### सुसंस्कृत परिवारों में शिक्षा-

इस काल में स्त्री शिक्षा उत्कर्ष पर थी। यह धनी, सुसंस्कृत, कुलीन और आर्य परिवारों का ध्यानाकर्षण प्राप्त करती थीं। इन परिवारों की लड़कियों को साहित्यिक शिक्षा का ज्ञान कराया जाता था। यद्यपि कि वे वैदिक साहित्य के अध्ययन के लिए अर्ह नहीं थीं। लोग अपने पुरुष सम्बन्धियों द्वारा किए गये गलतियों को ढूंढ़ते थे जो संस्कृत और प्राकृत को पढ़ एवं समझ सकते थे। इनके अन्दर कुछ विशेष योग्यता थी, जिससे वे ललितकला, घरेलु कामकाज, सम्बन्धित कला, संगीत, नाच गाना एवं घर के सजावट आदि के द्वारा अपना स्थान बनायी हुयीं थीं। गांडासा के रोजगार और हारायत्ता में यह उल्लेख है कि राजा अग्निमित्र के समय में धनी परिवार के लोग स्त्रियों की कला शिक्षा आदि के लिए योग्य गृह शिक्षक रखते थे।

### वैदिक काल में स्त्री लेखिका-

सुसंस्कृत परिवार की शिक्षित स्त्रियाँ साहित्य सृजन में अपना महत्त्वपूर्ण योगदान करती थीं। अनेकों उन्नत कवयित्रियाँ दक्षिण भारत में थीं जिन्होनें प्राकृत में

1. महाभारत -अनुशासनपर्व-59, 28
2. काव्य मीमांसा, पृ०सं०-53
3. भोज प्रबन्ध- 88, 89, 147, 204 प्रबन्ध चिन्तामणि पृ०सं०

कविताओं की रचना किया। इनमें से कुछ चयनित लेखिकाएँ सप्तशती गाथा में मिलती हैं। सात कवियित्रियाँ हैं- 1- रीवा 2- रोहा 3- माधवी 4- अनुलक्ष्मी 5- पहाई 6- वाधावाही 7-शशिप्रभा सिल्लोभट्टारिका अपने सरल एवं सरस शैली के लिए प्रसिद्ध थी तथा ध्वनि एवं शैली में सुरीला समन्वय स्थापित करती थी। देवी गुजरात की एक प्रसिद्ध कवयित्री थी जो अपना जादू स्वर्ग में जाने के बाद भी पृथ्वी पर छोड़ गयी थी। विरार की विजयंका कालिदास के बाद दूसरी प्रसिद्ध कवयित्री थी। संस्कृत के कवि एवं कवयित्री में उनकी अच्छी प्रतिष्ठा थी। कवि राजशेखर उनकी तुलना सरस्वती से करते थे।

एक नाटक जिसका नाम है कौमुदीमहोत्सवी जिसका जल्दी ही प्रादुर्भाव हुआ था। वह एक कवयित्री के कर कमलों द्वारा रचित था। इस कवयित्री का नाम संभवतः विद्या या विसाका था। इस नाटक में पाटलिपुत्र की राजनैतिक क्रान्ति को दर्शाया गया था। यह उन औरतों द्वारा दिखाया गया था जिनकी वहां के राजनीतिक इतिहास में रुचि नहीं थी। बाद में पद्यावली या गद्यावली में कुछ अन्य कवयित्रियों का नाम था जो इस प्रकार है- सुभद्रा, सीता, भरूला, इन्दुलेखा, भावादेवी और विकातनितम्बा। इस युग की स्त्रियाँ और छात्राएँ आलेचना में भी सक्रिय भाग लेती थीं। राजशेखर की पत्नी एक अलोचिका कवयित्री थीं। कुछ छात्राएँ चिकित्सा शिक्षा की तरफ भी आकर्षित थीं। इसमें प्रसूति विज्ञान की अधिकता थी। कुछ स्त्रियों ने चिकित्सा विज्ञान सम्बन्ध लेखन कार्य भी किया। आठवीं शताब्दी में मिडवाहपुरी की जिसका अनुवाद अरबी भाषा में था इसकी रचना स्त्री चिकित्सक जिनका अरबी में नाम रूसा था ने किया था।[1]

**स्त्री शिक्षा और आर्थिक स्वतंत्रता-**

साधारण परिवारों में स्त्री शिक्षा का पसंदीदा विषय साहित्य एवं कला था। यह शिक्षा आर्थिक दृष्टि से स्त्रियों को स्वयं के लिए पर्याप्त नहीं थी, बल्कि सैद्धान्तिक दृष्टि से स्त्रियों की आर्थिक स्वतंत्रता आज के युग के परिप्रेक्ष्य में होनी चाहिए। आपातकाल में हिन्दू औरतें कुछ आवश्यकता की पूर्ति के लिए स्वयं एवं अपने बच्चों की आवश्यकता को देखते हुए खाली समय में सूत काटती या कपड़े बुनती थीं। पाटिल साहित्य में हम संकेत पाते हैं कि कुछ औरतें अपने पति के मरने के बाद अपने परिवार के रख रखाव के लिए अपनी बुद्धि का इस्तेमाल करके सूत काट के या बुनाई करके जो आमदनी होती थी उससे अपना खर्च चलाती थीं। कौटिल्य ने अर्थशास्त्र में इस बात पर जोर देकर कहा है कि उस समय राज्य के अधीक्षक उन औरतों के लिए जिनके पति मर चुके होते थे या कार्य करने के योग्य नहीं होते थे या बाहर रहते थे तथा जो सहायता के लिए कुछ करना चाहती थीं उनके लिए रूई भेजने तथा धागा प्राप्त करने के लिए विशेष प्रबन्ध करते थे। नवीं शताब्दी के साक्ष्यों

1. शंकरदिग्विजय Viii 51

से यह पता चलता है कि जो स्त्रियाँ विधवा होती थीं तथा जिन्हें सुविधा प्राप्त नहीं थी उन्हें पालन पोषण के लिए सूत काटने का प्रशिक्षण दिया जाता था। यह स्वतंत्र अस्तित्व वाला साधन भारत में समाज के कमजोर महिलाओं के लिए उपलब्ध था।

इस प्रकार वैदिक काल में स्त्रियों की शिक्षा पर विशेष बल दिया गया। उन्हें भी पुरुषों के बराबर शिक्षा प्राप्त करने का अधिकार था। उपरोक्त विवरणों के आधार पर हम यह निश्चित तौर पर कह सकते हैं कि वैदिक काल स्त्रियों की शिक्षा का स्वर्णकाल रहा होगा।

बौद्धकाल में स्त्री शिक्षा प्रचलित थी। स्त्रियों को भी शिक्षा ग्रहण करने का अधिकार था। बौद्ध कालीन शिक्षा में भिक्षुओं का चरित्र भ्रष्ट न हो इसलिए संघ में स्त्रियों को सम्मिलित नहीं किया गया। कालान्तर में महात्मा बुद्ध ने अपनी विमाता प्रजापति गौतमी एवं प्रिय शिष्य आनन्द के आग्रह पर संघ में स्त्रियों को प्रवेश करने की अनुमति दे दी। उसके फलस्वरूप स्त्री शिक्षा को पर्याप्त प्रोत्साहन प्राप्त हुआ। स्त्रियों की शिक्षा के लिए अलग मठों विहारों की व्यवस्था हुई। जहाँ पर उन्हें ब्रह्मचर्य व्रत का पालन करते हुए धर्म शास्त्रों एवं साहित्य का मनन कर अपना मानसिक विकास एवं चरित्र निर्माण करने की व्यवस्था की गयी। प्रारम्भ में स्त्रियों की संख्या अति अल्प थी। स्त्रियों के संघ में प्रवेश करने का निर्माण केवल भिक्षु ही करते थे। वे अल्प संख्या में स्त्रियों के प्रवेश करने की अनुमति देते थे, अतः स्त्रियों की संख्या कम ही रह जाती थी। संघ में विशेष रूप से कुलीन और व्यावसायिक वर्ग की स्त्रियों ने ही प्रवेश किया। वे सभी भिक्षुणी हो गयी थीं। साधारण स्त्रियों की शिक्षा का बौद्ध प्रणाली में कोई स्थान नहीं था। जब चौथी शती ई० में बौद्ध शिक्षा केन्द्रों का अत्यधिक विकास हुआ और अन्तर्राष्ट्रीय ख्याति प्राप्त कर गये तो भी स्त्रियों को इन विद्यालयों में प्रवेश नहीं दिया गया, फिर भी कुछ अन्य केन्द्रों में स्त्री शिक्षा प्रचलित थी, जिससे उनका चारित्रिक उत्थान हुआ। इस काल में अनेक विदुषी महिलायें हुई जिन्होंने विभिन्न क्षेत्रों में समाज का नेतृत्व करते हुए दर्शन एवं धर्म के क्षेत्र में भी अभूतपूर्व योगदान दिया। ये जीवन पर्यन्त भिक्षुणी बनी रहती थीं। कुछ बौद्ध धर्म के उपासकों के गृहों में स्त्रियाँ पवित्र ब्रह्मचर्य जीवन का पालन करती थीं। और धर्म तथा दर्शन का गूढ़ अध्ययन करती थीं। 'गाथा' की रचना स्त्रियों ने ही की थी। कहा जाता है कि उन्हें सदाचार व्रत के पालन के कारण निर्वाण प्राप्त हो गया था। इनमें 32 अविवाहित और 18 विवाहित थीं। शुभा, अनुपमा और सुमंधा आजीवन ब्रह्मचर्य का पालन करती रहीं। इस काल के प्राप्त ग्रन्थों के आधार पर स्पष्ट होता है कि स्त्रियाँ बौद्ध धर्म का प्रचार करने विदेश भी गईं, जिनमें सम्राट अशोक की बहन संघमित्रा का नाम प्रमुख रूप से लिया जाता है। संघमित्रा ने लंका आदि देशों में बौद्ध धर्म का प्रचार किया। अल्तेकर ने भी लिखा है कि स्त्रियों के संघ में प्रवेश करने की आज्ञा से स्त्री

